Vasavadatta of Subandhu had great influence over the people of Kerala. Many of the socio-religious institutions of the people of Kerala owe their origin to this famous work. This subject has been thoroughly discussed in the introduction to 'Bhasha Ramavana Champu' No. 17 of the Sri Mulam Malayalam Series published by me.

I may here repeat that the scholars of Kerala had inter-course with the literary men of Upper India and so the work of Vasava Datta as soon as it was written must have gained celebrity and popularity in Kerala. It is on account of the fame of this work that Narasimha referred to it in his commentary in preference to the works of Kalidasa and other poets and Puranic stories in general. From these arguments it follows that Narasimha might have been a contemporary of Subandhu or at the most a little after his period. And Subandhu was prior to Sankara is indisputable. So the probable period of Narasimha's existence can be fixed in the 8th century A.D. If all the arguments advanced *supra* be taken up and carefully considered the period of Narasimha can be fixed with more accuracy at 630–730 A.D. If Subandhu's period is fixed, as some scholars have done, to be later than the first part of the 7th century and earlier than the middle of the 8th century, then also the period of Narasimha fixed above does not require any alteration.

If however Bhadanta Nagarjuna, the author of the Sutras, was the preceptor of Narasimha then he may be considered to belong to the 7th century A.D. If Bhadanta Nagarjuna is identical with the famous Nagarjuna, the Budhist Chemist which is not very likely, then the period of the author is somewhere near the 2nd century A.D. If the author is any other than the redactor of Susruta and the preceptor of Narasimha then the period of his existence was between the 2nd century and the 7th century A.D.

These are the only possible conclusions that can be drawn from the internal evidence at our disposal.

The manuscript copy in appearance is more than 500 years old. It is mostly worn out and the characters are hardly legible in most places. The manuscript is 15¼" long and 1¾" wide containing 105 palm leaves which are not numbered with the

symbolical notation referred to above. The writer was not perhaps aware of such a mode of notation. Each leaf contains 8-9 lines and each line is made up of practically 50-60 characters. The grantha is written in Malayalam character with such peculiar formations as were common in the writings of olden days. The first eight leaves contain the Sutras alone. The 9th leaf is devoted to matters irrelevant to or unconnected with the subject. The Sutra and Bhashya are on written pages 10-105.

The Manuscript grantha was obtained from Brahmasri Narayanan Parameswaran Moosad, the senior Member of the Cheerataman Illam (family) of Olassa in the Kottayam Taluk. This Illom is one of the Ashta Vaidya families of Kerala all of which are famous for their successful traditional methods of treatment according to Ashtanga Hridaya. The original family house of this Ashta Vaidya was at Shertalla whence it was shifted nearly a century ago to its present abode at Olassa owing to the collision of interests which this family had with that of Vellod Moosad, an equally famous and important Ashta Vaidya family of the same locality.

Rasa Vaiseshika was an old collection of the Cheerataman Illom in those good old days when it was at Shertalla. This manuscript, once made use of by the members of that family with advantage, was of late practically discarded as old and unintelligible. The fact that this manuscript—the only one of its kind—was obtained from an ancient Ashta Vaidya family which had its abode for centuries in the Shertalla Taluk where even now the family possesses extensive properties contributes additional weight to the argument that both the author and the commentator of Rasa Vaiseshika lived and wrote at Thiruvidai Vihara (now temple)—a Buddhistic centre of ancient glory and importance in the same Taluk.

The manuscript had been deciphered with great difficulty and the clerical mistakes and omissions which were abundant, were all corrected and filled up as far as possible before publication. The ravages of time proved a great obstacle in many places but the difficulties have been practically overcome by reference to the context and in comparison with the standard works on Ayurveda both published and unpublished.

My attempts to secure a second copy of the manuscript proved futile. I had therefore to base this publication entirely on one manuscript the nature of which has been fully described *Supra*. The usefulness of the work alone induced me to undertake this arduous task which was beset with difficulties from the very commencement. Rasa Vaiseshika is now published for the first time. It is hoped that this publication will be of great use to scholars and students. To those students who study for Higher diplomas in Ayurveda this will be a suitable text book wherein the fundamental principles are thoroughly discussed with conspicuous ability.

All glory to Her Most Gracious Highness Sri Vanchi Setu Lekshmi Bhai, the Maha Rani Regent of Travancore, under whose benevolent administration of prosperity and universal contentment the series known as "The Sree Vanchi Setu Lakshmi Series" has been started solely for the publication of Ayurveda and Jyotisha manuscripts which are the most eloquent testimony of the keen interest the Malayalees took in the advancement of these two sciences as evidenced by the many valuable original contributions they have made for the edification of Bharata Varsha.

*Trivandrum,*
*14th April 1928.*

K. SANKARA MENON

॥ श्रीः ॥

श्रीभदन्तनागार्जुनकृतं

# रसवैशेषिकसूत्रम्

[ नरसिंहकृतभाष्योपेतम् ]

प्रज्ञायत्तमिदं हि नैकविषयं शास्त्राधिगम्यं फलं
शक्यं नैव हि साधिगन्तुममला हित्वा परीक्षास्पदम् ।
* + + + + + + + + + + + + + + ब्रवी-
दायुर्वेदपदार्थतत्त्वविदुषां चक्षुः परं निर्मलम् ॥

सिद्धान्तान्तरनिश्चितार्थगहनं हेत्वर्थतत्त्वानुगं
त्यक्त्वानेकविपञ्चनार्थपदवीं व्यक्तार्थशब्दात्मकम् ।
प्रीत्यर्थं विदुषामनुग्रहकरं मन्दात्मनां सर्वदा
तस्येदं सुपरीक्षितार्थविषयं भाष्यं मया कथ्यते ॥

अथात आरोग्यशास्त्रं व्याख्यास्यामः ॥ १ ॥

इतीदं खलु तस्यादिवाक्यम् । अत्राथशब्दोऽधिकारे द्रष्टव्यः । किमधिकुरुते । आरोग्यशास्त्रव्याख्यानमधिकुरुते । आरोग्यशास्त्रं व्याख्यास्याम इत्यनेनायमर्थः किं न लभ्यते । लभ्यत एव । तथापि द्योतितमर्थं वाचकेन स्फुटीकरोति । महता प्रकाशेनोपलब्धे वस्तुनि पुनः प्रदीपः किं द्योतयति । तथाप्यस्त्येतेषां द्योतकानां स्वधर्मता । अन्यवाक्यसन्निधानवृत्तित्वं तदर्थविशेषद्योतकत्वं चेति न कदाचित् पृथगर्थवन्तः इति ।

---

* 'तच्छास्त्रं रसभेदिकामिधमिदं नागार्जुनः प्रा' इत्येवञ्जातीयेन पाठेन तृतीयपादोऽयं पूरणीयः ।

 

उक्तं हि—

"उपसर्गनिपातानां केवलानां स्वभावतः।
न स्वरूपादृतेऽर्थोऽस्ति द्योतकास्त्वन्यसन्निधौ॥
सुप्तिङन्ताभिधेयस्य वाक्यस्यातिप्रसङ्गतः।
व्यवच्छेदाय युज्यन्ते चादिप्रायाः क्तादिवत्॥"

इति। अत्राप्यारोग्यशास्त्रव्याख्यानारम्भं द्योतयति। अथवा पूर्वप्रकृतापेक्षणतामाविष्करोति। पूर्वप्रकृता ह्यत्र गृहीततन्त्रशरीरा विशेषार्थजिज्ञासवो मर्त्याः। तेषामनुमत्यर्थमुक्तमिति। एवं वार्त्तिकप्रयोजनमपि द्योतितं भवति विशेषार्थप्रकाशनमिति। भवति चात्र सूत्रार्थानामनुपपत्तिसूचनात् तत्परिहारवचनं, विशेषार्थदर्शनं च वार्त्तिकमिति। अत्राह— कस्येदं वार्त्तिकमिति। अष्टाङ्गस्यायुर्वेदस्य सकलस्य, आरोग्यशास्त्रं व्याख्यास्याम इत्यविशेषेणोक्तत्वात् सर्वतन्त्रपदार्थसंग्रहाच्च। अथवा विशेषतः कायचिकित्सायाः। सामान्यशब्दानां विशेषवाचकत्वमिष्यते प्रधानापेक्षया। यथा—

"सामान्यवाचिनः शब्दा भवन्ति श्रेष्ठगामिनः।
वैद्य रुक्जसामान्ये भिषक्पथ्यपरिग्रहात्॥" 

इति। प्राधान्यं पुनरस्याः शेषाङ्गेष्वपि कायचिकित्साया विषयपर्यापन्नैरेव स्नेहनस्वेदनादिभिरारोग्यसाधनात्। स्नेहनस्वेदनवमनविरेचनास्थापनानुवासननस्यकर्मप्रधाना हि कायचिकित्सेति विशेषितं हि। अतः शब्दोऽपि तथा क्रमाद् अधिकृतस्यार्थस्येदानीं व्यासः क्रियत इति। पूर्वप्रकृतापेक्षणपक्षे हेत्वर्थे, तदर्थिगुणसम्पत्प्रकाशनार्थमिति। आरोग्यशास्त्रमिति। (आरोग्यनिमित्तं शास्त्रमारोग्यशास्त्रम्)। (रुजतीति रोगः शरीरयात्रां मृद्नातीति)। कः पुनरसौ रोग इति। अवस्थाविशिष्टो दोषः। उक्तं हि—



"विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते।"

इति। अथापि तेषां वृद्धिक्षयौ व्याधिस्तस्य भैषज्यमुच्यत इति। न रोगः अरोगः अरोगभाव आरोग्यम्। एवं ह्यारोग्ये परिकल्प्यमाने आरोग्यं रोगाभावमात्रं स्यात्। तत्र को दोषः स्यात्। तल्लक्षणसाधनफलानामसम्भवः स्यात्। अर्थाभावस्य लक्षणतो भावात्। अवस्तुत्वादिति भावः। तस्मादत्रायं नञोऽर्थोऽन्यथा प्रतिपद्यते। अयं च प्रतिषेधः

सप्तस्वर्थेषु वर्तते। कथं.

"प्रतिषेधे च सत्ताया, अन्यत्वे, सदृशेऽपि च।
कुत्साल्पविरहार्थेषु विपक्षे चापि नञ् भवेत्॥"

इति। वस्तुप्रतिषेधे यथा — अभावः, वस्तुनः सत्तां प्रतिषेधयति। अन्यत्वे अब्राह्मण इति 'जातिरप्राणिनाम्' (२-४-६) इति च। सदृशे अब्राह्मणोऽयमक्षत्रियोऽयमिति। ब्राह्मणसदृशो भवति क्षत्रियसदृशो भवति। तद्वदिति गम्यते। कुत्सायामपुत्र इति। ईषदर्थे अलवणा यवागूः अनुदरा कन्येति। विरहार्थे अनपास्त्रिजनोऽयं विहार इति। विपक्षे अपुण्यमशीतमिति च। अत्र तावद् विपक्षे द्रष्टव्यः। रोगविपक्षे आरोग्ये स्वस्थतायामित्यर्थः, अन्येष्वर्थविशेषेष्वसम्भवात्। रोगाभावमात्रमेवारोग्यमिति। अयमागमस्तर्हि कथमिति—

"आरोग्यमाहुर्भिषजः सर्वाबाधनिवर्तनम्।
वदन्ति पुनराबाधं दुःखं शारीरमानसम्॥"

इति। अत्रायमुपचारः सर्वाबाधनिवर्तनं भवतीति। अथवा निवर्त्यतेऽनेनेति करणसाधनम्। आरोग्यं दोषसाम्यं. तेन शारीरं मानसं सर्वं दुःखं निवर्त्यत इति। अनुत्पत्तितः शास्ति त्रायत इति शास्त्रम्। आरोग्यं शास्ति रोगेभ्यस्त्रायत इति। विस्तरतो विशेषतो (व्या ? वा) व्याख्यास्याम इति विशब्दः। अत्राङभिविधौ द्रष्टव्यः। यावत् व्याख्यातव्यं तावदिति। 'अस्मदो द्वयोश्च' (१-२-५९) इति बहुवचनम्॥१॥

एवमारोग्यशास्त्रव्याख्यानं प्रतिज्ञाय तस्य शास्त्रस्याधिकरणभूतानि वस्तूनि स्वस्थवृत्तमातुरवृत्तं षट्पदार्थं चेति तेषु स्वस्थवृत्ते किमधिकृतमित्याह—

## चातुर्विध्यमधिकृतमारोग्ये॥ २॥

इति। चत्वार एव विधयश्चातुर्विध्यं षाड्गुण्यवत्। कथं त इति। आरोग्यतल्लक्षणसाधनफलानीत्येतानि चत्वारि आरोग्ये स्वस्थवृत्तेऽधिकृतानि। अयं स्वस्थवृत्तस्य समुद्देशः। आरोग्यशब्दस्तावन्मुख्येन मार्गेण दोषसाम्ये प्रवृत्तस्तद्युक्तपुरुषचरितमप्यभिदधात्युपचारवृत्त्या। यथान्यत्रापि वासवदत्तायां मे सुबन्धुना वद्धमुदयनेन च गुप्तमिति वासवदत्ताचरिते उदयनचरित इति (?)। एवमत्राप्यारोग्ये स्वस्थवृत्त इति स्यात्। अथवा आरोग्यनिमित्तं स्वस्थवृत्तमारोग्यमिति

तद्धेतौ स्यात्। यथा सुखो वह्निः सुखं काल आगत इति। एवं सति स्वस्थवृत्तं साधनमिति चतुष्टयं विकणादि वृत्तं कथं साधनमिति। द्रव्यादयो हि साधनमिति। तत्र कर्मपदार्थविकल्पं वृत्तमिति चेत्। न। स्नेहादेर्द्रव्यायत्तत्वात्, स हि प्रयोक्तेति। वृत्तं हि नाम तस्योक्तस्य साधनविशेषस्यानुष्ठानं प्रयोगविषयपुरुषायत्तम्। उक्तं हि—

"विपक्वभोजी प्रतिकारणं (र)तो
हितानि चान्नानि समाचरन् (मितम्)।
असाहसं कर्म समाचरन् सदा
शतं समा जीवति मानवः सुखी॥"

इति।

"यस्तु पथ्यं न जानाति जानन् वापि न सेवते।
तस्य दोषाः प्रकुप्यन्ति बहिरन्तर्मलानि च॥"

इति। सर्वं हीदं शास्त्रं साधनमेवं त्याज्यग्राह्यद्वारेण, तथापि भेदकविवक्षया भेद्यकारणवशात् सर्वमनेकधा भिद्यत इति न साधनं स्वस्थवृत्तमारोग्यस्वरूपम्। यथा वातादिसाम्यं—

"समेषु यात्रा भवति सम्यगाचरतां सुखम्।
विषमेषु भवेद् व्याधिर्वैषम्यं विषमाशनात्॥"

इति। अस्य ? अस्य स्वस्य रूपं स्वरूप चेत् कथं वातादिसमता। व्यतिरिक्तमन्यत्। साम्यमस्ति, कस्य स्वरूपमिति। अन्यत्वेऽप्यस्त्ययं व्यपदेशः। तद्यथा—सुप्रतिष्ठितमाकाशं स्वात्मना निलुठितः कुम्भ इति स्वो भावः स्वरूपमनिर्देशाश्च(?) स्वभावानां पदार्थानामेवं शब्दैरभिलपनं क्रियते विकल्पमुखेन। आह च —

"नहिं धर्मस्वभावेन व्यवहारानुपातिनः।
विकल्पविपदग्धास्तु भवन्ति भ्रान्तिहेतवः॥"

इति। तल्लक्षणमन्नप्रार्थनादिकं पञ्चदशप्रकारं तत्साधनं हितमिति। तल्लक्षणमाहाराचारं स्नेहादिश्च न साधनं यादृच्छिकस्वस्थापेक्षया। कोऽयं यादृच्छिको नाम। भिषक्परिपालितादन्यः। उत्तरत्र स्वस्थपरीक्षायामुच्यते। आरोग्यफलं धर्मादिचतुष्टयावाप्तिलक्षणम्। अन्यैरप्याचार्यैरेवमुक्तं हि—

"समवाताद्यारोग्यं रुचिपक्तिबलानि लक्षणं तस्य।
साधनमस्य हितमितं फलमस्य चतुष्टयावाप्तिः॥" इति।

एवमविसंवादिताधाराधेयभावं चातुर्विध्यं सिध्यति । अस्मिन्न- स्मत्परिकल्पितार्थविशेषे श्रद्धेयार्थश्चागमः प्रदर्श्यते । अस्य सकलस्य प्रवचनस्यादिभूतस्य महर्षेर्भगवतो भरद्वाजस्य दर्शनं यथा—

"अरोगता चैव सरोगता च
स्वस्थस्य वृत्तं च तथातुरस्य ।
द्रव्यं गुणाश्चैव रसाः सवीर्या
विपाककर्माणि च षट् पदार्थाः ॥
एतावदेतत् तु चिकित्सितं स्यात्
तत्रापि कार्यं तु बहूनवेक्ष्य ।
सम्यक् तु सिद्धिर्विपरीतमन्य-
देकैकभेदाद् तु भवेदनेकः ॥
आरोग्यविज्ञानमुपायसिद्धिः
फलं च भोक्तव्यमरोगतायाः ।
आरोग्यमेषां तु सदैव विद्या-
दबाधनं तच्च समैस्तु दोषैः ॥
तल्लक्षणं पञ्चदशप्रकार-
माहारकाङ्क्षा स्वदनं वि(वे ? पा)कः ।
पुरीषमूत्रानिलसृष्टता च
तथेन्द्रियार्थग्रहणे च शक्तिः ॥
मनस्सुखत्वं बलवर्णलाभः
स्वप्नः सुखेन प्रतिबोधनं च ।
उपायतः साधनमस्य विद्यात्
स्नेहादि यत् कर्म मया प्रदिष्टम् ॥
विद्यादिहारोग्यफलं नराणां
धर्मार्थकामप्रतिमोक्षसिद्धिः ।"

इति । इदानीं चातुर्विध्ये दर्शनान्तराणि चिन्तयामः । केचिदत्र वाक्य- संबन्धमेवं कुर्वन्ति—व्याख्यास्यति भगवानारोग्यशास्त्रं, तस्मिंस्ताव- दारोग्यशास्त्रे किमधिकृतमिति पृष्टः सन्नाह चातुर्विध्यमिति । एव- मिष्यमाणे कथमनिर्दिष्टस्यारोग्यस्य प्रस्तावकाशः । यदि शास्त्रस्य स्याद्, युक्तरूपं । कथम् । आख्यास्यति भगवानारोग्यशास्त्रं, तस्मिन् शास्त्रे

किमधिकृतमिति । एतदपि नोपपद्यत इति । आरोग्यस्यात्मनि वृत्तिविरोधाच्चतुष्टयासम्भवः । एवं पृष्ठान्यार्थपरिकल्पना न युक्ता आरोग्यशब्दस्य । आरोग्ये आरोग्यशास्त्र इति केचित् । तेषां पक्षे शास्त्रे तावदेतच्चतुष्टयमधिकृतमस्ति । आरोग्यशब्दस्यापि शास्त्रवाचकत्वं गौणपरिकल्पनया भवति । किन्तु 'तथानारोग्ये' इत्यत्र विसंवदति, अनारोग्यशास्त्रस्याभावात् । आरोग्यानारोग्यगतसकलभेदापरित्यागरूपेण प्रवृत्तत्वादारोग्यशास्त्रस्यान्यदनारोग्यविषयं नास्ती(त्यु? त्ययु)क्तश्चायं परिकल्पः । अथापि 'द्रव्यादिर्गणोऽनयोर्मूलमि'त्युत्तरञ्च वचनाञ्च घटनामुपगच्छति । केचिदाहुरारोग्ये पुरुषे इति । तन्न तावद् युक्तम् । भाववाचकत्वादारोग्यशब्दस्य । अन्यथा द्रव्यवाचकश्चेत् कथमनारोग्ययुक्तः सुधीरोऽपि मर्त्य इति वक्तुं शक्यते । केचिदारोग्यमाधारभावेन व्यवस्थाप्य चातुर्विध्यमन्यथा परिकल्पयन्ति धर्मार्थकाममोक्षा इति । अयं च पूर्वोक्तेन भरद्वाजागमेनैव प्रत्युक्तः, फलाविरोधात् । यद्ययमागमो न स्यात्, शक्यं यद्वातद्वा चतुष्टयं परिकल्पयितुम् । केचिदायुर्बलं वर्णमग्निः समाधिरिति चतुष्टयमभिवाञ्छ(ता ? न्ति) । तदपि भरद्वाजागमेनैव प्रत्युक्तं, लक्षणाविरोधात् । इह तावदस्मद्गुरुणा नागार्यार्याचार्येण स्वभाष्ये परिकल्पितमस्ति आरोग्ये (मुक्त ?)मुक्तरोगावस्थायामिति । मुक्तरोगावस्था हि नाम व्याधेर्विमुक्तमात्रस्य पुरुषस्य दोषाणां व्याध्युत्पादनविमुखानामपरिपूर्णसाम्यस्वरूपावस्था, (यां ? यस्यां) ततः प्रभृति तत्साधनोपार्जनेन स्वलक्षणैः सहैवारोग्यमुत्पद्यत इति । तत्र चतुष्टयमपरिभिन्नाधाराधेयं भवतीति । अत्रागमश्च विद्यते—

"मांसप्रकारेषु रसं तु मुख्यं
मुद्गप्रकारेषु च सूपमाहुः ।
तौ स्वस्थवृत्ते च हितौ नराणां
रोगाभिभूतेषु च रोगमुक्ते ॥"

इति । अस्त्येतत् । किन्तु न व्यापकमित्यस्मान् न प्रीणयति । कथमिति । किं सर्व एव स्वस्था मुक्तरोगावस्थाया ऊर्ध्वमेव दोषसाम्ययुक्ता भवन्ति । न भवन्ति । यादृच्छिक एव खलु स्वस्थ एवं मन्तव्य इति । तस्मादागमविरोधाद् युक्तिसद्भावाच्चास्मदीय एवायः परिकल्पः श्रेयान् ॥ २ ॥

शास्त्राधिकरणेषु तावत् स्वस्थवृत्तेऽधिकृतान्युपलभ्यानि। आतुरवृत्ते काम्यधिकृतानीत्यत्राह—

## तथानारोग्ये ॥ ३ ॥

इति। तथेति चतुष्टयमतिदिशति। कस्मादयमतिदेशः संख्यामेवापकर्षति नात्रारोग्यादीनि, तत्प्रतियोग्यनारोग्यशब्दस्यासमस्तत्वात् तेषाम। अनारोग्यमनारोग्यलक्षणं तत्साधनं फलं चेति चतुष्टयमनारोग्ये आतुरवृत्तेऽधिकृतं वेदितव्यम। तत्रानारोग्यं व्याधिः। स पुनरवस्थाविशिष्टो दोष इत्युक्तः प्राक्। किं तद् दुःखसंयोगो व्याधिरिति नेष्यते। निष्टन्तु तावद् गुणपदार्थव्याधिवादिनस्ते। संयोगिनोरत्र पृथग् भावात् कथं संयोगः सिध्यति। संयोगमुखेनात्र दुःखमेव व्याधिरिति परिगृहीतं स्यात्। उक्तं हि—

"दुःखं व्याधिर्नाम + दोषाश्रयजं यत्
तत्पर्याप्तं नान्यदवश्यं परिमृग्यम्।"

इति। तच्च दुःखं तोददाहकण्ड्वादिभ्योऽन्यन्नास्तीति लक्षणेषु व्याधिप्रसङ्ग इति। उक्तमनारोग्यलक्षणं द्विविधं—सामान्यलक्षणं विशेषलक्षणं चेति। सामान्यतास्याभेदव्याप्तेः। विशेषता परस्परवि(वि ?-शेष)णात्। अपि च,

"स्वभेदावष्टम्भकं सर्वं मतं सामान्यलक्षणम्।
परस्परात्मव्यावृत्तिर्भेदानां येन गम्यते ॥
विशेषलिंगं तत् प्रोक्तं व्याधीनां तद् यथा ज्वरे।
सन्तापतोददाहादिरेकानेकत्वसाधकः ॥"

इति अनन्तरश्लोकौ। (तत्साधनं तत्समुत्थानं संक्षेपतः प्रज्ञापराधः असात्मेन्द्रियार्थोपयोगः परिणामश्चेति त्रिविधम। तत्र प्रज्ञापराधो मानसानामागन्तूनां च। असात्मेन्द्रियार्थोपयोगः शारीराणाम। परिणामः स्वभावव्याधीनामिति)। तत्फलं चतुष्टयानवाप्तिः। कथमनवाप्तिः फलमिति। कथं तर्हि सर्वाभावलक्षणो मोक्षः फलं भवति। अथापि व्याध्युपसृष्टानां व्याधिपरिमोक्षणं कथं फलं, पर्यायत्वात प्रयोजनशब्दस्य। व्याधेस्तत्फलं भवति न पुरुषस्येत्यदोषः। उक्तं हि—

"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ॥"

इति ॥ ३ ॥

एवं स्वस्थातुरवृत्तकं भेदं संक्षेपेणोक्त्वा तद्भेदैश्चारोग्यानारोग्ययोः साधनस्य तन्त्रेषु विप्रकीर्णस्य संग्रहार्थमाह—

द्रव्यरसगुणवीर्यविपाककर्माण्यनयोर्मूलम् ॥ ४ ॥

इति । अनयोरारोग्यानारोग्ययोः स्वस्थातुरवृत्ताधिकृतयोरिति । अत एवानयोरित्याकर्षति । अन्यथा स्वस्थातुरवृत्ते चेदभिप्रेते ह्युभयोरित्यवक्ष्यत् । द्रव्याणि च रसाश्च गुणाश्च वीर्याणि च ऊर्ध्वभागादीनि विपाकौ (?) च कर्म च स्नेहादि एतानि मूलं कारणं योनिरिति योऽर्थः । एत एव द्रव्यादयो विशेषेणैवोत्तरत्र विस्तरतो वक्ष्यन्त इति नात्र व्याक्रियन्ते ॥

एवं षट्सु पदार्थेषु द्रव्यादिषु सामान्येनोभयोर्मूलत्वेनोक्तेषु विरुद्धयोरुभयोरेकस्मात् कारणादुत्पत्तिमसम्भाविनीमिव मन्यमानस्योत्तरमाह—

कथमेकस्मादुभयमिति चेत् सम्यङ्मिथ्येति विशेषः ॥ ५ ॥

इति । एकस्माद् द्रव्यादेरिति समूहापेक्षया । उभयमारोग्यानारोग्यं कथमुत्पद्यत इति योऽर्थः, विरुद्धत्वादित्यभिप्रायः । तत्र प्रयोगः—नैककारणजनितमारोग्यानारोग्यं, परस्परविरोधात्, शीतोष्णवत् । अथवा भिन्नकारणजनिते आरोग्यानारोग्ये भिन्नकारणत्वात्, अश्वमहिषवत् । अन्यथायं प्रयोगः – न परस्परविरुद्धारोग्यानारोग्यसाधनं द्रव्यादिगणः एकत्वात्, प्रकाशतमसोरि(वे)ति । एनं हेतुमसिद्धमिव मन्यमान आह—सम्यङ्मिथ्येति विशेषोऽस्तीति । सम्यङ्मिथ्याप्रयोगविशेषापेक्षया भिन्न एव द्रव्यादिर्गण इत्युक्तं भवति । सम्यङ्मिथ्येत्येतन्निपातद्वयं कथं प्रयोगशब्दासन्निधौ प्रवर्तमानं प्रयोगं गमयति, निपातोपसर्गाणां वाचकशक्त्यभावात् । कथं तर्हि निष्कौशाम्बिरित्यत्र क्रान्त्यर्थं निर्गमयतीति, तत्र कौशाम्बीसन्निकर्षात् समानापेक्षया च गमयति । यद्येवमत्रापि विशेषशब्दसंबन्धाद् गमयति । कथमिति । सम्यगिति विशेषः, मिथ्येति विशेषः । कस्य । द्रव्यादेरिति गम्यते । द्रव्या(धी ?-दी)नां प्रयोगाधीनत्वात् । सम्यङ्मिथ्यात्वयोः प्रयोग इत्यर्थापेक्षत्वाद् गम्यते । अथापि स्वयं च विशेषयति 'प्रकृत्यादीन्यनपेक्ष्य प्रवृत्तिर्मिथ्ये'ति ।

अत्र प्रयोगः—परस्परविरुद्धारोग्यानारोग्यकारणं द्रव्यादि, सम्यङ्मिथ्याप्रयोगापेक्षत्वात्, मनोवाक्कायकर्मवत् पुण्यापुण्ययोः ॥ ५ ॥

अन्यदपि हेत्वन्तरमभिधीयते—

## भेदाच्च ॥ ६ ॥

इति । कथमेकस्मादुभयमिति चेद्, द्रव्यादीनां भेदादिति योऽर्थः । अन्यत्वादिति । चशब्दात् पूर्वोक्तं हेतुं समुच्चिनोति । द्रव्यादीनां भेदः पुनर्द्विविधः आश्रयतः कर्मतश्च । तत्राश्रयो भूतसमुदायः । विषागदयोर्यथा वा पाञ्चभौतिकत्वे सत्यपि वाय्वग्न्याकाशोद्रेकलक्षणभूतसमुदायो विषस्याश्रयः । अगदस्य पुनः पृथिव्यप्प्रधानो भूतसमुदाय आश्रयः । कर्मभेदस्तस्य विषस्यानारोग्यजननम्, अगदस्य स्वास्थ्यजननम् । अथवा समानं दोषाणां दूषणं विषकर्म, दुष्टानां साम्येऽवस्थापनमगदकर्म । एवं तदाश्रितानां रसादीनां चाश्रयभेदः कर्मभेदश्च द्रष्टव्यः । अनेनापि हेतुना एकत्वाद् द्रव्यादिर्नोभयकारणमित्युक्ते तस्यैव कर्मत्वमसिद्धमिति साधितं भवति । अत्र केचिद् भेदादितीदं वाक्यं न वक्तव्यमिति । कुत इति पूर्वेणैव हेतुना सिद्धत्वाद् द्रव्यादेर्भेदस्य । विषागदद्रव्याणि च स्वगतभेदानपेक्षं प्रयोगविशेषादारोग्यसाधनानि भवन्ति,

"दुर्योगेन तु भैषज्यं विषवत् क्रमते नृषु ।
विषं चापि हि योगेन भैषज्यत्वाय कल्पते ॥"

इति वचनादिति । न इदं प्रष्टव्याः—कस्य प्रयोगाद् भूर्विरोहति, धारयति, गुरुत्वात् पतति, आपो जीवयन्ति, क्लेदयन्ति चेति । यदि स्वशक्तिविशेषादि(ति), अस्ति द्रव्यादिगतो विशेषः । द्रव्यादिशक्तिनिरपेक्षं प्रयोगसाद्गुण्यादेव फलप्रवृत्तिः स्यात् । तैलार्थिभिः सिकताः सङ्गृह्य तिलपीडनयोग्ये सम्यक्प्रयोगेण पीडयितव्याः स्युः । तत्रैतत् स्यात्—

"दुर्योगात् तिलराशिभ्यो नैव तैलं कदाचन ।
सम्यक् प्रयोगात् स्यात् तैलं सिकतापांसुराशिषु ॥"

इति । सर्वभावेषु विद्यमानस्यैव शक्तिविशेषस्य तत्प्रयोजननिर्वर्तकत्वेन योजनं प्रयोगः । 'दुर्योगेन तु भैषज्य'मित्यस्यापि वाक्यस्यार्थः नैसर्गिकानारोग्यहेतुरपि विषं प्रयोगविशेषादारोग्यहेतुर्भवति, तथा प्रकृतितः

एवारोग्य हेतुभूतं मैत्र्यमपि मिथ्याप्रयुक्तमनारोग्यहेतुर्भवतीति। स्वभावभेदास्तित्वप्रकाशनार्थमेव प्रयोगस्तत्परं चैतद्वाक्यमिति न (किञ्चन ?) किञ्चिदेतत्। अथवा भेदादिति (?) अथवा आरोग्यानारोग्ययोर्भेदाद् भिन्नलक्षणात्। एवं कार्यभेदात् कारणभेदोऽनुमेयः। तस्मान्नैकान्तं तद्द्रव्यादिकं साधनमिति। अत्राह — सम्यङ्मिथ्याप्रयोगलक्षणेन हेतुना तावत् कर्मपदार्थप्राधान्यं शेषाणां च तदपेक्षित्वमेव प्रसाधितं भवति। कर्मपदार्थभावा वा सम्यक्प्रयुक्तास्त एवार्थकरा इति। उच्यते। अत्र कर्मपदार्थो नाम स्नेहादिः। प्रयोगो हि नाम द्रव्यादीनां स्वकर्मण्यवितथरूपेण प्रवर्तको मतिविशेषः, तत्प्रेरितं कायकर्म चेति अस्ति विशेषः। अथापि क्रियायास्तदाधारस्य च तत्त्वान्यत्वं प्रति तार्किकाणां मतिभेदो विद्यते (न ते ?) नास्माकमित्यर्थः। अलौकिकत्वात् ॥ ६ ॥

इदानीं सम्यङ्मिथ्याप्रयोगयोः किं लक्षणमित्याह—

प्रकृतिवयोबलशरीरसत्त्वाग्निमूलानुबन्धग्रहणीदेशकालौषधकाल केवलदोषसंसृष्टसन्निपातस्थानव्याधिस्थानव्याधिविशेषपुरुषविशेषसात्म्यक्रियाविक्रियाविशेषमात्राभिजनारोग्यप्रायत्वानारोग्यप्रायत्वव्यापत्सिद्धि-द्रव्यरसगुणवीर्यविपाककर्मण्यनपेक्ष्य प्रवृत्तिर्मिथ्या सम्यगवेक्ष्य सम्यक् ॥ ७ ॥

प्रकृतिवयोबलशरीरेत्यादि। एतानि प्रकृत्यादीनि कर्मपर्यवसानान्यनवेक्ष्य प्रवृत्तिर्मिथ्याप्रवृत्तिः। एतानि सम्यगवेक्ष्य प्रवृत्तिः सम्यक्प्रवृत्तिः। कस्मिन् प्रवृत्तिः। कर्मणि। यद्येवं, कथं कर्मणि प्रवर्तमानेन तदेव कर्मावेक्ष्यते। अवेक्षा नाम हि परीक्षा। सा हि तस्य कर्मणः प्राप्तिप्रतिषेधोत्सर्गापवादप्रकारानवलम्ब्य प्रवर्तत इति न दोषः। प्रवृत्तिः प्रयोगः, स पूर्वमेवोक्तः। सम्यगवेक्ष्येति। यथाभिप्रायसिद्धिर्भवति, तथेत्यर्थः। प्रकृतिश्च वयश्च बलं चावेक्ष्येति। चार्थे समासः। प्रकृत्यादिभिरविरोधेन चिकित्सानुष्ठानं सम्यक्प्रयोगः; विरोधेनानुष्ठानं मिथ्याप्रयोगः। एष एव वाक्यस्य पिण्डार्थः। इदानीमवयवशोऽर्थो वर्ण्यते। प्रकृतिर्नाम जन्ममरणान्तरालभाविनी गर्भावक्रान्तिसमये स्वकरणोद्रेकजनिता निर्विकारिणी दोषस्थितिः। तामुत्तरत्र स्वयमेव विचारयिष्यतीति न विपञ्च्यते। न(स्यावे ? रया अवे)क्षया चिकित्सा। वातप्रकृते-

वाताविरुद्धं कर्तव्यम्। एवं शेषेष्वपि। निसर्गात् प्रभृत्युच्छ्रितत्वाद्(?) अल्पेनाप्यपचारेण वैकृतमुपयाति प्रकृतिदोषः, तद्व्याधिमन्यं व्याधिं वा जनयतीति। एवमन्येष्वप्यवेक्षणीयेष्ववेक्षाप्रयोजनं यथासंभवं वाच्यम्। तत्र वयो हि नाम शरीरस्य परिणामविशेषः। स च त्रिविधः। पूर्वो मध्यमोऽपरश्चेति। तेषु श्लेष्मपित्तवाताः यथासंख्यमुद्भूतप्रवृत्तयो भवन्ति। उक्तं हि—

"बाल्ये प्रवर्धते श्लेष्मा मध्यमे पित्तमेव च।
अन्त्ये प्रवर्धते वायुस्तच्चयं वीक्ष्य कारयेत्॥"

इति। तत्तदवस्थासु शरीरलिंगैरपि ज्ञायत एव तत्तद्दोषप्राभूल्यम्। यथा सौकुमार्यसौभाग्याभिवृद्ध्युपचयादयः श्लेष्मलिङ्गानि प्रथमे वयसि जायन्ते। खालित्यपालित्यतिलकालकव्यङ्गतीक्ष्णप्रज्ञादयः पित्तकार्याणि मध्यमे वयसि। कम्पावनतिशैथिल्यादयो वातलिङ्गान्यन्त्ये। तस्मिंस्तस्मिन् वयसि तत्तद्दोषाविरुद्धं प्रवृत्तिः सम्यक्। इतरथा मिथ्या। बलं नाम धातुविवेकसम्पज्जनितं शरीरचेष्टासु सामर्थ्यम्। तत् किं दोषधातु-मलेष्वन्तर्भूतम्, अथान्यत्, तेषामवस्थाविशेषो वा। धातुष्वन्तर्भूतं, विशेषतः शुक्रधातोरेव प्रसादः। यथा सर्पिषो मण्डः, तथा ओजः शुक्रस्य सर्वशरीरगतम्। तदेव हि बलम्। तस्य कार्यं सामर्थ्यम्। शुक्राप्यायनैरेव बलमाप्यायते मैथुनान्ते बलक्षयदर्शनाच्च। उक्तं हि—

"सद्योबलकरं क्षीरं सद्योबलहराः स्त्रियः।"

इति। अथापि

"दिवा वा यदि वा रात्रौ (यः? यं) कालं मैथुनं चरेत्।
अनन्तरं प्रस्वपतो बलवर्णौ प्रसीदतः॥"

इति। अत एवोक्तं सुश्रुतेन—"रसादिशुक्रान्तानां यत् परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तादि"ति। तत्संबद्धास्त्रि-विधाः पुरुषाः—दुर्बलो बलवान् मध्यबल इति। तेषु यथान्यायं प्रयोगः। यथा दुर्बले मृद्वी क्रिया मध्यमे मध्यमा बलवति महतीति। अन्यथा मिथ्या। शरीरं नाम दोषधातुमलसङ्घातश्चेष्टेन्द्रियार्थाश्रयम्। तदपि त्रिविधं स्थौल्यकार्श्यमध्यमभेदात्। तत्रापि पूर्ववत् प्रयोगः। सत्त्वम-सावना सहिष्णुत्वं च। तत्र सत्त्ववति तीक्ष्णक्रियाप्रयोगः, अन्यस्मिन् परि-वर्जनमिति सम्यक्। ततोऽन्यथान्यः। अग्निर्नाम नाभिपक्वाशयान्तराश्रितः

ऊष्मा पचनविवेकसमर्थः सवेतो वायुना पिण्डीकृतः) स चतुर्विधः—समस्तीक्ष्णो विषमो मन्द इति। एतेषु यः समः, स एव स्वस्थानामग्निः। शेषास्त्रयो दोषदूषिताः। एवं तर्हि कथं प्रकृतिलक्षणेषु श्लेष्मप्रकृतेर्मन्दाग्नित्वं, तीक्ष्णाग्नित्वं पित्तप्रकृतेर्विषमाग्नित्वं वातप्रकृतेरुपलभ्यत इति। तत्रौपचारिकोऽयं प्रयोगः विषमवद् विषमः, किञ्चित् साधर्म्यात्। मन्दवन्मन्द अल्पभुग् भवतीति। खादकः पाचकोऽन्नभागिति वचनात् त्रयाणामपि पुरुषाणां समानलक्षणोपलब्धेश्च। कथमिति,

"स्वस्थमूत्रपुरीषत्वं भक्तेच्छा दृढगात्रता।
ओजोमांसाभिवृद्धिश्च यस्य तस्य समोऽनलः॥"

इति। एतानि लक्षणानि यस्मिन्नुपलभ्यन्ते, स खल्वल्पभुग् वा समाग्निरेव भवति। समाग्नेः कारणमपि दोषसाम्यमेव। उक्तं हि—

"वातेन विषमो वह्निः श्लेष्मणा मन्द एव च।
पित्तेन च तथा तीक्ष्णः समैर्दोषैः समस्तथा॥"

इति। शेषाणामग्नीनां लक्षणानि व्याधिरूपाण्येव। यथा

"अरोचकः प्रतिश्यायो भक्तापाको बलक्षयः।
छर्दिश्चैवातिसारश्च मन्देऽग्नौ संभवन्ति हि॥
गुरु शीतं च रूक्षं च स्निग्धमन्नं विशेषतः।
भुक्तं विपच्यते क्षिप्रं न च रोगाय कल्पते॥
यस्य तस्यानलं विद्यात् तीक्ष्णं ताल्वोष्ठशोषणम्॥"

इति।

"कदाचित् पच्यते भुक्तं कदाचिन्न विपच्यते।
यस्य तस्य विजानीयादग्निं वैषम्यमागतम्॥"

इति। तत्र सम्यगवेक्षणं नाम तीक्ष्णे महती, मन्देऽल्पा, विषमे तद्योगेति। अन्यथा मिथ्या। (मूलं पूर्वोत्पन्नो व्याधिः स्वतन्त्रः व्यामिश्रलक्षणो व्यक्तः। अनुबन्धः पश्चादुत्पन्नः तद्दोषनिमित्तमन्यनिमित्तं वा।) उक्तं हि—

"पूर्वोत्थितं व्याधिमुपद्रवन्तमुपद्रविद्धया लघुं लघुं वा (?)"

इति। अन्यत्रापि—

"कश्चित् प्राक् केवलो व्याधिः कश्चिदन्यस्य लक्षणम्।
कश्चित् पूर्वोत्थिते व्याधौ पश्चाज्जात उपद्रवः॥"

इति । अत्र यत्तु वक्तव्यमस्माभिस्तन्मूलानुबन्धप्रकरणादवगन्तव्यम् । अत्रानुब(ला ? न्धा)विरोधेन मूलस्य वा चिकित्सा, मूलाविरोधेनानुबन्धस्य वा सम्यक् अन्यथान्या । ग्रहणी नाम,

"अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता।"

इति । सा च त्रिविधा—मृद्वी दारुणा मध्यमेति । तत्र सम्यक्प्रयोगः स्नेहने शोधने च तत्तद्योग्यौषधस्य च मात्रायाश्च प्रयोगः । अन्यथान्या । देशः पुनः पृथिवी । स च त्रिविधः—आनूपो जाङ्गलः साधारण इति । तत्र जाङ्गलेषु मनुष्याः पित्तानिलप्रायाः?, आनूपेषु कफानिलप्रायाः साधारणे संसृष्टाश्च भवन्ति । तेषां यथादोषं प्रयोगः पूर्ववत् । कालं स्वायम्भुवमनादिमध्यनिधनं नित्यं कालमेकं खल्विच्छन्ति । तत्र तद् भवति—

"व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभुं द्रव्यं परिणामं क्रियावताम् ॥"

भावानां परिच्छेदकं नित्यं व्यापिनं निर्व्यापारं द्रव्यं कालमित्येवमेके ।

"आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
भिन्नमाव्यक्ति भेदेन कालं कालविदो विदुः ॥"

एवं ग्रहनक्षत्रविभागोपलभ्यनानावयवव्यक्तिभेदं कालमेके वाञ्छन्ति ।

"क्रियान्तरपरिच्छेदप्रवृत्ता या क्रिया प्रति ।
विज्ञातपरिमाणा सा काल इत्यभिधीयते ॥"

एवमपरिच्छिन्नायाः क्रियायाः परिच्छेदनार्था स्वयं परिच्छिन्ना क्रिया काल इत्यपरे । यथा गोदोहनं भुङ्क्ते चक्रभ्रान्ति भुङ्क्ते इति । गोदोहनक्रियापरिच्छिन्नाया भुजिक्रियायाः परिच्छेदे कालसंज्ञां लभत इति । एवं भिन्नेषु दर्शनेषु । आयुर्वेदे पुनः कालः शीतोष्णवर्षलक्षणः षोढा भिन्नः संवत्सरात्मक एव परिगृह्यते । तस्य खलु व्यावहारिक्या गणनयोपलक्ष्यमाणा भेदा निमेषादयो युगपर्यन्ताः तस्य चाभ्रवर्षहिमातपच्छायानिमित्ताश्च विशेषाः कालसंज्ञां लभन्ते । तत्र तेषां तेषां भेदानां प्रयोजनं तन्त्रेषु द्रष्टव्यम् । यथा—

"तीक्ष्णं मात्राशतं दंशे विषं तिष्ठति गौतम !"

इत्यादि । "वमनं पाययित्वा मुहूर्तमुपेक्षेते"त्यादि चेति । अथवा रोगावस्था च काल इत्युच्यते—वमनस्य कालो विरेचनस्य काल

इत्यादि वमनस्यावस्था रोगस्यावस्थेति। हिमशिशिरवसन्तग्रीष्मवर्षाशरत्संज्ञिताः षड्तवः। तेषु हिमशिशिरग्रीष्मवर्षाः श्लेष्मवातपित्तानां सञ्चयावहा यथाक्रमं प्रकोपकालाः। अत्र हेमन्तशिशिरौ तुल्यगुणत्वाच्छ्लेष्मणः सञ्चयावहौ। एकः पुनर्वर्षाख्यो वायोः प्रकोपकरः पित्तस्य सञ्चयकरः। एतेषु तत्तदनुगुणप्रतिपक्षेण चिकित्सानुष्ठानं सम्यग् अन्यथा मिथ्या। अत्राह—वर्षाहेमन्तग्रीष्मेषु सञ्चितानां खलु दोषाणां शरद्वसन्तप्रावृट्सु प्रकुपितानां निर्हरणमित्यत्र शिशिरपरित्यागात् प्रावृषश्चान्यस्य परिग्रहात् कथं वर्षासु वायोः प्रकोपः शिशिरे च श्लेष्मणः सञ्चयः सिध्यतीति। उच्यते—अत्र तावद् हेमन्ते शिशिरावरोधं कृत्वा प्रावृट्च्छब्दो वर्षापर्याय इति नायं दोषः। वर्षामुखे वायोः प्रकोपः, अवगाढासु वर्षासु पित्तस्य सञ्चय इति। प्रोद्भूतवर्षः प्रावृडिति। उक्तं हि चरके—'अथत्वायमन्यान्त्रिकाणां वर्षाः मार्गशीर्षादयश्चत्वारो हेमन्तः। चैत्रादयश्चत्वारो ग्रीष्मः। श्रावणादयश्चत्वारो वर्षाः। तेषामाद्यावसानिकमृतुं कृत्वा शरद् वसन्तः प्रावृडित्येकः प्रावृट्त्वन्तरं भवति। हेमन्ते शिशिरोऽवरुद्ध' इति। एते खलु हेमन्तग्रीष्मवर्षाख्यास्त्रयः कालाः शीतोष्णवर्षलक्षणाः। ऋतवश्च षडिति सिध्यति। ऋतुसन्धिसंज्ञिताः खल्वेते शरदादयः साधारणगुणत्वादिति। इदानीमौषधकालः। औषधस्यावचारणकाल औषधकालः। स च दशविधः—

"पूर्वभक्तं अधोभक्तं मध्ये भक्तस्य चौषधम्।
सभक्तमुपरिष्टाच्च देयमन्तरभक्तकम् ॥
मुहुर्मुहुः समुद्गं च ग्रासे ग्रासान्तरे दश।"

इति। तत्र पूर्वभक्तं नाम किम्। प्रातरौषधं पीत्वा जीर्णे भोजनार्हं, तत्र भवति, तदभक्तं नाम। पूर्वभक्तं भक्तात् पूर्वमिति गमयति। तस्माद् भोजनकाल एवौषधं पीत्वा तस्योपरि भुज्यते। तस्य फलवचनेऽप्युक्तं—

"प्राग्भक्तपीतं भैषज्यं न करोति बलक्षयम्।
अन्नप्रणुन्नकोष्ठत्वाच्छीघ्रं पक्वाशयं व्रजेत् ॥"

इति। सभक्तं भक्तेन सह संस्कृतम्। अन्तरभक्तमुभयोर्भक्तकालयोरन्तरे दीयते। शेषाः प्रसिद्धा एव। अत्र यथाव्याधि यथाकालमवचारणं

* मुद्रितचरके न दृश्यते।

सम्यग्. अन्यथान्यत् । दोषाः वातपित्तश्लेष्माणः केवलाः संसृष्टाः सन्निपातिता इति सप्तधा भिन्नाः । दोषास्तद्भेदा इति, तदपेक्षया चिकित्सा संसर्गसन्निपातयोरुत्कटापेक्षया वा बाधकतमापेक्षया वा प्रत्येकं दोषस्वभावाविरुद्धमिति शेषं पूर्ववत् । स्थानं दोषाणामग्नेश्च । नाभेरधस्तात् पादतलादूर्ध्वं वातस्यायतनम् । नाभेरूर्ध्वमधो हृदयात् पित्तस्य । ऊर्ध्वं हृदयादधो मस्तकाच्छ्लेष्मण इति । अग्नेश्च नाभिपक्वाशयान्तरम् । रसतश्च दोषाणां स्थानं विद्यत इति केचित् । तदसम्यक् । तस्य दोषस्थानस्य तेन दोषेण भावितत्वात् असौ र(स) इति । मधुरं हि श्लेष्मणः स्थानम् । अम्लं पित्तस्य । कटुकं वातस्येत्युक्तम् । तत्र स्थानापेक्षया चिकित्सायाः स्वस्थानगतानां दोषाणां बलवत्त्वान्महता प्रयत्नेन कर्तव्यमिति, पित्तस्थानगतस्य वायोः पित्तवत् क्रियाविभाग इति च । एवं सम्यगत्र स्थूणानामपि दोषाणामन्यत्र स्थानं विद्यते । उक्तं हि—

"त्वक्छोणितान्तरे पित्तं मांसमेदोन्तरे कफः ।
अस्थिमज्जान्तरे वायुरेवं त्रिस्थूणमुच्यते ॥"

इति वचनादिति । उपकारार्थं वर्तमानानां शरीरे सर्वत्र तेषां भावः नेष्यते । अत्र स्थानमिति विशेषस्थानमुक्तमिति । व्याधिर्ज्वरातिसारादिः । व्याधिविशेषः साध्ययाप्यासाध्यत्वम् । अथवा व्याधिसामान्यं ज्वर इति, व्याधिविशेषा वातज्वरादयः । तत्रावेक्षा सामान्यावेक्षा (दोषा ? विशेषा)वेक्षा । सामान्यावेक्षा सर्वज्वराणां तरुणावस्थायां स्निग्धगुरुशीतवर्जनादि । विशेषावेक्षा वातज्वरस्य वातानुपूर्वमित्यादि । शेषं पूर्ववत् । पुरुषविशेष इति सुकुमारखरतादयः । तत्रापि यथार्हः प्रयोगः पूर्ववत् । सात्म्यक्रिया सात्मीभूताहाररसायनुष्ठानं सात्म्योचितमिति । तस्य तु सात्मनो देशकालरोगादिभेदाद् भेदः । देशसात्म यस्मिन् देशे यदाहाराचारमुचितं* तत् । कालसात्म ऋतुगुणप्रतिपक्षं तद्विरुद्धं चिकित्सा कर्तव्येति पूर्ववत् । अत्र केचित् पृथक् स्नेहादिकमिच्छन्ति । तदयुक्तं, कर्मपदार्थविरोधात् । विक्रिया अविभ्रम । आयुः पुनरादौ परीक्ष्यमिति वचनात् । अथवा विप्रतिषिद्धा क्रिया विक्रिया । यथा गुल्मिनामूर्ध्वरक्तपित्तानां च वमनम् । तत्रावेक्ष्यं, तत्र यथार्हं पूर्ववत्

* समाहारद्वन्द्वनिर्देशः ।

क्रियाविशेष इति। संशोधनसामान्ये प्राप्ते पूर्वं वमनस्य वा विरेचनस्येति परीक्षा। अथवा वमने प्राप्ते तस्मिन् विशेषः मदनफलेन वा जीमूतेन वेति। एवं सम्यक्। शेषं पूर्ववत्। अभिजनः जातिर्ब्राह्मणादिः। तदवेक्षा तत्प्रतिषिद्धद्रव्यप्राप्तौ तद्योग्यप्रतिनिधिसंश्रयणम्। यथा—

"द्विजमौषधमाम्लेन यथास्वं पाययेद् भिषक्।"

इति। अत्रारोग्यप्रायत्वमनारोग्यप्रायत्वं व्याधिबहुलता स्वास्थ्यबहुलतेति। व्याधिप्रायस्त्वौषधपरिक्लिष्टत्वाद् दुश्चिकित्स्यो भवति, नेतरस्त्वौषधपरिभावितौषधत्वादिति। तयोस्तत्र तद्योग्यः प्रयोगः सम्यक्। व्यापदः क्रियाणां मिथ्याप्रयोगनिमित्ता व्याधयः। संक्षेपतस्ते द्विविधाः— अयोगनिमित्ताश्चातियोगनिमित्ताश्चेति। सिद्धिः तासां कासाञ्चिद् व्यापदां चिकित्सितम्। तयोरवेक्षा नाम — कर्मणि प्रस्तुते प्रयोगे वास्मिन् एता व्यापदः सन्ति, तासामियं प्रतिक्रिया, तत्र प्रयोक्तव्यान्येतान्यौषधानि प्रागेवार्जितव्यानीति चिन्तनम्। द्रव्यादयः पूर्वोक्ता एव। तेषामवेक्षणं तद्योग्यभूमिजातत्वमविपन्नत्वमित्यादि। अत्राह — व्यापत्सिद्धिक्रियाविशेषावेक्षाभिश्च कर्मावेक्षणमेव कृतम्। इदानीं पुनः कर्मावेक्ष्येति किमिति। अत्र हि कर्मावेक्ष्यमिति वमने क्रियमाणे किं पित्तान्तं प्रच्छर्दनं, विरेचने वा कर्तव्ये किं पुरीषबहुलं पित्तप्रायं श्लेष्मान्तं वेत्यवेक्षितव्यमिति। एवं शोषणामपीति केचित्। अत्र कर्मेति दोषधातुमलानां प्रकृतिकर्मेति वदन्ति। तन्नोपपद्यते। उद्देशविरोधाच्चिकित्सायां तदवेक्षाभावात्। तस्मिन् काले तेषामभावाच्च। आरोग्यप्रायत्वव्याधिविशेषादिषु तेषामवरोधाच्च ॥ ७ ॥

एवमेते प्रकृत्यादयः पदार्थाः प्रदर्शिताः, प्रायः परीक्षिताश्च। इदानीमेतेषु पदार्थेषु ये तन्त्रेषु दुर्विज्ञेयास्तत्त्वतः परीक्षितव्याः तेषां परीक्षा पृथक् क्रियते। तत्रादौ तावत् प्रकृतिरेव नोपपद्यते। कथं तदवेक्षया चिकित्सेत्याह—

प्रकृतेरभावः सर्वदोषवत्त्वात् सर्वेषाम् ॥ ८ ॥

इति। अत्र प्रकृतेरभाव इतीयं प्रतिज्ञा प्रकृतेः सत्तां प्रतिषेधयति। सर्वदोषवत्त्वात् सर्वेषामित्ययं हेतुः प्रतिज्ञया विशिष्टः; अभावविशेषणविशिष्टा प्रकृतिः पक्षीशनेति। सर्वेषां सर्वे दोषाः। सर्वदोषवत्त्वं प्रकृतिधर्मो न भवति हि यद्येवं नायं हेतुप्रयोगः। किं तर्हि।

उत्तराशङ्कश्चात्र पूर्वपक्ष इति । तन्त्रेषु वातप्रकृतिः पित्तप्रकृतिः श्लेष्मप्रकृतिरिति श्रूयते । तत्र वातप्रकृतिरिति केनार्थेनोच्यते । अस्य वायुः प्रकृतिः कारणं शरीरस्य, तस्माद् वातमयशरीरत्वाद् वातप्रकृतिरित्युच्यते । यथा मृत्प्रकृतिर्घट इति । अथान्येन वातप्रकृतेन विशेषेण प्रकृतिशब्दवाच्येन युक्त इत्येवं प्रकृतिशब्दाभिधेयगतिविभक्त्या विभज्य पक्षद्वयमुत्थाप्य तयोरन्यदोषनिरपेक्षतद्दोषवत्त्वैव वातप्रकृतिरित्यभ्युपगम्यते, ततः प्रकृतेरभावः प्राप्तः । कुतः, सर्वेषां वातपित्तश्लेष्मप्रकृतिमत्ता सर्वेषां विद्यत इति । एवमनुमानागमप्रत्यक्षविरोधात् अस्मिन् पक्षे प्रकृतेरभाव एव स्याद् इत्येवमुक्तत्वं युज्यते । अन्यथास्य वाक्यस्य समुत्थानावकाश एव न स्यात् । उत्तरसूत्रे उच्छ्रयेणेति चेदित्याशङ्कायाश्चावकाशो नास्ति । ॥ ८ ॥

एवं तद्दोषबलात्प्रकृतिपक्षेऽशेषदोषसद्भावापह्नवस्याशक्यत्वात्, सत्यपि सर्वदोषवत्त्वे यस्य यो दोषस्तूच्छ्रितो भवति, तेनासौ तत्प्रकृतिरित्युच्यते इत्येवं केनचिद् विशेषेण द्वितीयपक्षाश्रितमेनं मत्वाह—

## उच्छ्रयेणेति चेत् समत्वानुपपत्तिः ॥ ९ ॥

इति । प्रकृतिदोषोच्छ्रयस्य नित्यानुषङ्गिकत्वात् समायां प्रसिद्धिर्न भवतीति । अत्र प्रयोगः—उच्छ्रितो दोषो न प्रकृतिकारणं प्रकृतिर्वा साम्यविरोधाद्, ज्वरादिदोषजनकवदिति ॥ ९ ॥

उच्छ्रितस्य दोषस्य प्रकृतित्वे दोषान्तरप्रदर्शनार्थमाह —

## उच्छ्रये चावश्यंभावी विकारः ॥ १० ॥

इति । उच्छ्रये सति विकारश्चावश्यं भवतीति । चशब्दात् साम्यभावश्चेति । अवश्यमित्यागमप्रसिद्धत्वात् तेषां

"तेषां वृद्धिक्षयौ व्याधिस्तत्र भैषज्यमुच्यते ।"

इति । पुनरुच्छ्रयग्रहणं न वक्तव्यमिति । (अ)वश्यंभावी विकारश्चेति वक्तव्यम् । उच्छ्रितत्वादिति हेत्वर्थप्रदर्शनार्थमित्यदोषः । कथमिति । उच्छ्रिते दोषप्रकृतिरिति पूर्वपक्षेणोक्ते प्राह—न दोषः प्रकृतिकारणं उच्छ्रितत्वाद् व्याधिजनकदोषवदिति ॥ १० ॥

उच्छ्रयनिमित्तं विकारे सति किं स्यादित्यत आह—

प्रकृतेश्चाभावः सति विकारे ॥ ११ ॥

इति। प्रकृतेरभावश्च भवति समत्वाभावश्चेति समुच्चयार्थश्च-शब्दः। एतद् वाक्यं नारब्धव्यम्। उच्छ्रये चावश्यम्भावी विकारो न प्रकृतिरित्यनेनैव गतार्थत्वात्। दोषस्योच्छ्रये सति यदि व्याधिर्भवति, स एव व्याधिः, प्रकृतिः स्यादिति यदि कश्चिदभ्युपेयात्, तं प्रत्युक्तमिति केचित्। तदयुक्तम्। कुतः। यदि सोपपत्तिकं प्रकृतेरभावं दर्शयित्वा विकारस्य जन्मैव भवतीति प्रतिषिद्धे विकारः प्रकृतिरिति कया युक्त्या ब्रवीतीति। तस्मादन्यथा कल्प्यते—उच्छ्रितो दोषः प्रकृतिरित्युक्तं मया। भवता व्याधिरुत्पद्यते उच्छ्रितेनेति प्रतिपन्नं, न प्रकृतेरभाव इति। तस्मादुच्छ्रितो दोषः प्रकृतिरप्यस्तु व्याधिं च जनयत्विति दोषोच्छ्रयस्यो-भयकर्तृत्वे परेण प्रापिते तन्निरासार्थमाह—प्रकृतेश्चाभावः सति विकार इति। प्रकृतिविकारयोर्विरोधादुच्छ्रयो नोभयकारणमिति ॥ ११ ॥

एवं विकारे सति प्रकृतेरभावं प्रदर्श्य पुनरप्युच्छ्रितस्य दोषस्य व्याधिजनकत्वमेवोपबृंहयन्नाह—

उपदिश्यन्ते च विकाराः प्रकृतिषु ॥ १२ ॥

इति। उपदिश्यन्ते च विकाराः प्रकृतिलक्षणाभिव्यञ्जकेषु वाक्येषु विकारा एवोपदिश्यन्ते, स्फुटितपादस्कन्धवृषणत्वखालित्यपालित्यमन्दा-ग्नित्वबा(ढ ? धि)र्यादयः। तस्मात् प्रकृत्यभावो रोगोत्पत्तिश्च दृष्टे ॥१२॥

एवं प्रत्येकसंसृष्टप्रकृतिप्रतिषेधं कृत्वेदानीं त्रिसन्निपातस्य विशेषप्रतिषेधं प्रदर्शयन्नाह—

सान्निपातिक्याश्चाभावः सर्वेषामुच्छ्रयाद्धि साम्यम् ॥ १३ ॥

इति। उच्छ्रितस्य दोषस्य प्रकृतित्वे परिकल्प्यमाने सन्निपात-प्रकृतेरभावो भवति। सर्वेषां युगपदुच्छ्रयात् साम्यं भवतीति। एवं तद्दोषवत्त्वात् प्रकृतिपक्षो दोषप्रकृतिपक्षश्च निषिद्धः ॥ १३ ॥

एवं निषिद्धे पुनरेवोच्छ्रयप्रकृतिवादी लब्धागमबलसंश्रयेणान्यत् पक्षा-न्तरमवलम्ब्याह—

तस्माद् विकार एव प्रकृतिर्गुणविमिश्रः ॥ १४ ॥

इति।

यस्मादागमेषु भवता प्रकृतिलक्षणस्वरूपा व्याधयो दृश्यन्त इत्युक्तं, तस्मादागमबलादेव गुणविमिश्रो विकारः प्रकृतिरित्यस्माभिरभ्युपगम्यत इति। विकाराः पूर्वोक्ताः स्फुटितपादादयः। गुणाः स्थूललक्षत्ववैलक्षण्यसुभगत्वादयः। एभिर्गुणैः सहितो विकारः प्रकृतिरिति। अत्र गुणविमिश्रितविकारः प्रकृतिविज्ञानेन समानानीकजनितोच्छ्रयजनितज्वरातिसारादिभ्यो विशेषयति, एवं सति पक्षान्तरं भवतीति कृत्वा। अत्र तावदयं पक्षः कया युक्त्यावलम्ब्यते। यद्यागमबलाद्, न हि तादृश आगमोऽस्ति विकारः प्रकृतिरिति। अथ स्वेच्छाप्रतिपत्तिः, सापि न युक्ता। युक्त्यभावात्, प्रतिज्ञादोषाच्च। युक्त्यभावस्तावत् प्रकृतिविकारयोर्भिन्नलक्षणत्वात्। प्रकृतिदोषः पुनः-प्रकृतिरेव न सिद्धेति कथं तल्लक्षणा विकाराः प्रकृतित्वेन पक्षीक्रियन्ते। यदि सिद्धा, सैव यदि ननु प्रकृतिरिति नास्ति प्रतिज्ञान्तरस्यावकाशः। उच्छ्रयस्य प्रकृतित्वे तावदागमो विद्यते— 'श्लेष्मपित्तवाताधिकत्वं पृथक्त्वं तद्गुणयोगश्च व्यामिश्रो वा शरीरदोषप्रकृतेरनाबाधकत्वादि''ति। तद्दोषवत्तापक्षश्च शब्दार्थाक्षेपवशाद् युक्त एव। तस्मादत्रैवं स्याद् दोषोच्छ्रयप्रकृतिवादिपक्षे प्रकृतिर्नास्ति व्याधिरेव भवतीत्यः स्यैव बलाधानार्थं दृष्टान्तरूपे प्रकृतिलक्षणव्याधिपूपदर्शितेपूच्छ्रितस्य दोषस्य व्याधिकरणत्वमस्माभिरुक्तमेवेति दृष्टान्तं प्रदर्शयता प्रकृतिलक्षणेषु व्याधयः प्रदर्शिताः। तेषां व्याधीनां प्रकृतिलक्षणाभ्युपगमाद् वयमपि तमेव विकारं प्रकृतिरिति पश्यामः। कस्मादिति। अस्मत्प्रतिज्ञातदोषोच्छ्रयविनाशादिति ॥ १४ ॥

एवमनया युक्त्या प्रतिज्ञातो विकारः प्रकृतिरिति स्यात्। अत एव यथैवं कस्माद् भवान् दोषोच्छ्रयनिदानज्वरातीसारादीन् प्रकृतिरिति नाभ्युपैतीत्युक्ते आह—

न स पुनर्निषेकात् प्रभृत्युच्छ्रितेन दोषेण समुत्थितो बीजतः ॥ १५ ॥

इति। ज्वरादिभ्यः प्रकृतिलक्षणविकाराणां विशेषप्रदर्शनार्थं प्रकृतिसद्भावसिद्ध्यर्थं चोक्तमेतत्। स इति गुणविमिश्रो विकारः। पुनःशब्देन परस्याभिप्रायान् परामृशति। भवताप्युच्छ्रयकार्यमित्यभ्युप-

गतमिति निषेकात्प्रभृत्युच्छ्रितेनाधिकेन दोषेण वातादिना। हेत्वर्थे तृतीया, दोषहेतोरिति समुत्थितः समुत्पन्नः। बीजतः शुक्रशोणितात् बीजनिमित्तादुच्छ्रितात् दोषादुत्थिता न समानानीकनिमित्तमिति। एतेन ज्वरादयो निषिद्धाः। अत्र कथं शुक्रशोणिताधिष्ठानो दोषोच्छ्रयः सेत्स्यति। यदि भवति गर्भस्योत्पत्तिरेव न स्याद्, दोषदूषितत्वात बीजस्य। उक्तं हि—"रेतसि दुष्टे नापत्योत्पत्तिरस्ती"ति। अदुष्टास्त्विह दोषाः शुक्रशोणिताभ्यां निर्गच्छन्तीत्येतन्न लोके न शास्त्रे। अथ मतं स्यात् — कस्यचिदणुरूपेण दोषावयवाः सर्वत्र संपृक्ताः सन्ति, ते चादुष्टाः सर्वकालमधिकाः। तैर्गर्भनिष्पादके काले शुक्रशोणिताधिष्ठितैः प्रकृतय उत्पद्यन्ते। त एवोच्छ्रयकारणमिति। अयं तावत् प्रवादः सर्वसिद्धान्तविरुद्धः। कथमिति। कार्याणुपरिकल्पनात्। कार्यात्मानो ह्यणवो न सन्ति, कारणस्वभावास्त्वणव इति। अथाप्ययं प्रवादः 'सर्वं सर्वात्मकमिति साङ्ख्यीयः स्यान्नायुर्वेदनियमः। अथापि केचिदेवं मन्यन्ते षड्रसं रूक्षं चाष्टविधं रजः शुक्रं च। तद्यथा—"रसवीर्यं वातिकं पैत्तिकं श्लैष्मिकं पुरुषं जनयती"ति। अयमपि पक्षो न युक्तरूपः। सिद्धान्तविरोधाद् दृष्टविरोधाच्च। अदुष्टस्य शुक्रस्य रजसो वा रसभेदाभावात्, सारवद्रसस्य चैकात्मकत्वात् तत्कार्याणां शुक्रार्तवस्तन्यानामनेकरसत्वं नोपपद्यते। उक्तं हि—

"स्निग्धं शुक्रं स्थिरं सौम्यं मधुरं मधुसन्निभम्
सलिलस्पर्शमित्येते रेतसो + + +गुणाः॥"

इति। स्तन्यमप्युक्तं — "मधुरं प्रकृत्या पयस्तद्विपर्यये दुष्टं चतुर्विधं क्षीरं भवती"ति। अथापि बीजस्थैर्दोषैः प्रकृतयः कथमुत्पद्यन्ते, शरीरावयवत्वाद् दोषाणाम्। शरीरं हि भौतिकमिति। तस्माद् भूतान्येवारंभकाणि स्युः। दृष्टविरोधः। यदि मधुरशुक्रात श्लेष्मप्रकृतिः स्यान्मधुरशुक्रस्य पुरुषस्य सर्वकालं सर्वे एव तस्य पुत्राः श्लेष्मप्रकृतयः स्युः। नैव दृश्यन्ते। गतमानुषङ्गिकम्। अत्र बीजतः समुत्थित इति। बीजस्यतत्कारणनिमित्तमुच्छ्रितेनेति भावः। गर्भावक्रान्तिसमये शुक्रशोणिताधिष्ठानानि महाभूतानि बाह्यभूतादृष्टानुग्रहाच्छरीरमारभमाणानि स्वं स्वं कार्यजातमव*यवविकाराच्छरीरस्यारभन्ते।

* अवयवैः विकृतस्य शरीरस्येत्यर्थः।

तत्र पृथिव्यम्भसी बाहुल्येन यदि भवतस्तत्कार्यश्लेष्मा तदानीमाधिक्येन वर्तते। तदानीं तदुच्छ्रयकृता श्लेष्मप्रकृतिर्भवति। एवमुच्छ्रितेन दोषेण तल्लिङ्गभूताश्च विकाराः तथैव प्रकृत्योत्पद्यन्त इति। एवं शेषेषु नयः ॥१५॥

एवं सत्यारोग्यं कथं भवतीत्याह—

सत्येवं तस्मिन्नारोग्यसमाख्या क्षुत्पिपासादिसद्भाव इव ॥ १६ ॥

इति। प्रकृतिसंज्ञिते विकारे सत्येवमारोग्यसमाख्या भवति। यथा क्षुत्पिपासादिषु विद्यमानेषु आरोग्यसमाख्येति, तथेहापीति। ॥१६॥

हेतुना विना दृष्टान्तः साध्यं न साधयतीति हेतुरुपादीयते—

अनुगतत्वादन्यादृशत्वादितरेभ्यश्च ॥ १७ ॥

इति। अनुगतत्वादिति पूर्वोक्तेन विधानेन गर्भात् प्रभृत्युत्पन्नत्वात्। अत्र प्रयोगः—नारोग्यबाधकाः प्रकृतिलक्षणविकाराः, सहोत्पन्नत्वाद्, अनुगतत्वादित्यर्थः, क्षुत्पिपासादिवत्। क्षुत्पिपासादीनामारोग्यबाधकत्वं दृष्टमिति चेद्, न। तत्प्रेरितदोषनिमित्तत्वादिति। उक्तं हि—

"क्षुधाभिपरीतस्य कुप्यतः पित्तमारुतौ"

इति। इतरेभ्यो ज्वरादिभ्योऽन्यादृशत्वादित्यर्थः। स्थित्युत्पत्तिकार्यैः स्थितिरेव तेषामामरणात् तेषां साध्ययाप्यासाध्यभेदेनावस्थिता उत्पत्तिः पूर्वोक्ता। तेषां ज्वरादीनां समानार्थीकृतः कर्मबाधकत्वमितरेषामबाधकत्वमितीयं प्राक्तनी व्याख्या। यद्ययं हेत्वर्थः स्याद्, अनुगतत्वादित्यनेनैव सर्वं सिद्धं, क्षुत्पिपासादिवदनुगतत्वान्न बाधकमिति। अथवा अनुगतत्वादिति न वक्तव्यम्। अन्यादृशत्वादिति सिद्धे इतरेभ्योऽन्यादृशाः प्रकृतिलक्षणविकाराः, कथमनुगतत्वादिति तस्मादत्रैवं शोभेत—नारोग्यबाधकाः प्रकृतिलक्षणविकाराः अनुगतत्वात् क्षुधादिवदिति। कृते यदि कश्चिद् विरुद्धा*व्यभिचारीयलम्बनं कृत्वा प्रत्यवतिष्ठेत, आरोग्यबाधकाः प्रकृतिलक्षणविकाराः,

* 'ह्य' इति स्यात्।

उच्छ्रितदोषोद्भूतत्वादिति । तत्र प्रत्युक्तम । अन्यादृशत्वादितरेभ्य इति उच्छ्रितदोषोद्भूतत्वादिति । समानानीकजनितोच्छ्रितोद्भूतिर्यद्यभिप्रेता, अस्मात प्रत्यसिद्धो हेतुः, स्वकारणजनितत्वादसदुच्छ्रयस्य । यद्यन्यस्मादुच्छ्रयादिति, तदसाधनानन्वितो दृष्टान्त इति ॥ १७ ॥

पूर्वमुच्छ्रयपक्षे प्रतिषिद्धायाः सान्निपातिक्याश्चात्र प्रसिद्धिप्रदर्शनार्थमाह—

सान्निपातिक्यपि चैवं सति प्रसिद्धा ॥ १८ ॥

इति । एवं सतीति गुणविमिश्रे विकारे प्रकृतिरिति परिकल्प्यमाने इति । सान्निपातिक्यपीत्यपिशब्दः पूर्वमसिद्धावित्यर्थः । कथं सिद्धेति, सर्वेषां गुणविमिश्रा विकाराः सम्भवन्तीति ॥ १८ ॥

एवं पूर्वोक्तदोषाभावं प्रदर्श्य विकारः प्रकृतिरिति साधिते तदमृष्यमाण आह—

तदसम्यक्, प्रकृतेरन्यभावो हि विकारः ॥ १९ ॥

इति । यदि गुणविमिश्रो विकारः प्रकृतिरिति, तन्न सम्भवति । कुतः । प्रकृतेरन्यथाभावत्वाद् विकारस्य । नहि प्रकृतिरेव विकारं जनयति । प्रकृत्युत्पत्तिसमये उच्छ्रितो दोषः प्रकृतिमेव जनयति । तदवस्थया विकारं न जनयति, निर्विकारत्वात् प्रकृतिदोषस्य । तदवस्थाया अन्यावस्थाजनित एव विकार इति विकारकत्वमेव न सम्भवति प्रकृतिदोषस्य प्रकृत्यात्मनेति कुतस्तद्विकारः प्रकृतिः स्यात् । एतेन प्रकृतिलक्षणेषूपलभ्यमानानां स्फुटितपादादीनां व्याधित्वं प्रतिषिद्धं, प्रकृतिलक्षणत्वात् । प्रकृतेः कथं विकृतिलक्षणं स्यादिति । एतेन प्रकृत्यग्नीनामपि समाग्नित्वमविकारत्वात् । एवं विकारप्रकृतिपक्षः स्ववचनविघातोद्भावनया स्वागमविरोधोद्भावनया वा प्रतिषिद्धो वेदितव्यः । कथमिति । विकारः प्रकृतिरित्युच्यमाने विकारश्चेन् प्रकृतिः, प्रकृतिश्चेत् कथं विकार इति विरुध्यते, उभयोर्विरोधात् । अथ प्रकृतेरन्यथाभावः प्रकोपः विकारकरणं ऽयद्यं प्रकुपितो भूत्वा विकारमुत्पादयतीति, स खल्वन्यथाभावः विकारो हि मरणलिङ्गत्वाद् विकृतिलक्षणमित्युक्तत्वात् । यथा—

"प्रकोपो वान्यभावो वा क्षयो वा नोपजायते ।
प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥"

इति । एवमागमविरोधः ॥ १९ ॥

एवं प्रकृतिलक्षणानामविकारत्वे साधिते दोषोच्छ्रयप्रकृतिवादिनो गत्यन्तराभावं दृष्ट्वा तं शिक्षयन्निव स्थितपक्षप्रदर्शनार्थमाह—

तद्भावितत्वात् कायस्य प्रकृत्या न विकारः ॥ २० ॥

इति। तद्भावितत्वादेवेत्यत्र एवशब्दलोपो द्रष्टव्यः। यः पुनर्भवतोक्तो हेतु*रनुग्रहत्वादिति, स एव ननूच्छ्रितप्रकृतिदोषस्या - ध्यनारम्भकत्वेऽपि हेतुरित्युक्तं भवति। एवं हेतौ सति भवतासन्निहित-दृष्टान्ताभासस्य रोगतामभ्युपगम्य गुणविमिथविकारप्रकृतिपक्ष आश्रितः। तदसम्यगिति योऽर्थः, तद्भावितत्वात् तेन भावितत्वात् प्रकृतिदोषेणेति, कायस्येति शरीरं तेन भावितमिति प्रकृत्या प्रकृतिदोषेण प्रकृत्यवस्थये-त्यर्थः। न विकारः विकारं न करोतीति ॥ २० ॥

स्वयमेवात्र दृष्टान्तमाह—

तत्र विषकन्या निदर्शनम् ॥ २१ ॥

इति। विषेण भाविता कन्या विषकन्या। मध्यलोपी समासः। अश्वरथवत्। तद् विषं तस्याः शरीरे विकारं न जनयति। उक्तं हि—

"स्पृशन्ती हन्ति स्वेदेन गम्यमाना च मैथुनम् ।
पक्वं वृन्तादिव फलं प्रशातयति मेहनम् ॥
नैषा क्षमा द्रष्टुमपि पार्थिवस्य जिजीविषोः ।"

इति। अत्र प्रयोगः—प्रकृतिदोषावस्थानिमित्तं न देहस्य विकारः, तद्भावितत्वाद्, विषकन्याशरीरे तद्विषनिमित्तविकाराभाववदिति ॥ २१ ॥

स्वं च विषं विषवतां दोषाणां चाभ्यवहारः सात्म्यानाम् ॥ २२ ॥

इति। अनेकदृष्टान्तवचनं सुखाववोधनार्थं लोकप्रसिद्धदर्शनार्थं च। विषवतां सर्पादीनां विषं स्वकायं न दूषयति, तद्भावितत्वात् ॥२२॥

---

* रनुगतत्वादित्यावश्यकम् :

तथा —

पथ्याहाराश्च ॥ २३ ॥

इति ॥ २३ ॥

तद्भावितत्वादित्यस्य हेतोरनैकान्तिकत्वमनिष्टप्रसङ्गमुखेनाह —

तेनैवम् ॥ २४ ॥

इति । यद्येवमित्यर्थः ॥ २४ ॥

भाविता विकारं न कुर्वन्तीति चेत् सर्वदा विकाराभावप्रसङ्गः स्यात ॥ २५ ॥

गर्भनिषेकात् प्रभृति भाविता दोषा इति तैर्विकारो न स्यात् । अनिष्टं चैतत् । कस्मात् । विकारदर्शनात् तद्भावितत्वादित्ययं हेतुरनैकान्तिक इति । एव चेत् प्रकृतिदोषेण तन्निमित्तं व्याधयो न स्युः । तस्माद् वातप्रकृतीनां वातव्याधि(भि)र्न भवितव्यमित्ययमर्थ इति केचित् । प्रकृत्या न विकार इत्यस्य साध्यार्थः । यद्यसौ प्रकृतिजनकस्वरूपेण न विकार इति विशेषयति तदा नायमर्थः, अनैकान्तिकस्य विषयाभावात् । तद्भावितत्वादिति सामान्यं गृहीत्वानैकान्तिकं वक्तुं शक्यत इति पूर्व एवार्थः श्रेयानिति ॥ २५ ॥

अनैकान्तिकस्य तदाभासप्रदर्शनार्थमाह —

✓ यः प्रचीयते प्रकुप्यति चार्वाक् तेन विकारः ॥ २६ ॥

प्रकृतिरस्य साध्यस्यार्थः । भावितरूपेण न कदाचिद् दोषा-(ज्ञातिं ? व्याधिं) जनयन्ति । जन्मप्रभृति साम्यावस्थया हि दोषाणां भावितं शरीरं, न क्षयवृद्धिभ्याम् । तया साम्यावस्थया व्याधयो न भवन्ति । अर्वागुत्तरकालं यो दोषः प्रचितो भूत्वा प्रकुप्यति तेन व्याधिरिति न पूर्वदोषप्रसङ्ग इति ॥ २६ ॥

उच्छ्रितो दोषः प्रकृतिरिति प्रतिज्ञायेदानीं तस्यवोच्छ्रितस्य दोषस्य व्याधिजनकस्य द्वितीयस्योच्छ्रयस्याभ्युपगमात् प्रकृत्युच्छ्रयः परित्यक्तो भवतीति प्रदर्शनार्थमाह —

प्रकृतिव्यतिरिक्तस्योच्छ्रयोपचारादनुच्छ्रयः प्रकृतेः ॥ २७ ॥

इति । प्रकृतिव्यतिरिक्तस्येति प्रकृत्युच्छ्रयव्यतिरिक्तस्यान्वयस्योच्छ्रयस्योपचारावचनाद् अनुच्छ्रयः उच्छ्रयाभावः प्रकृतेः प्रकृतिदोषस्य स्यात् ॥ २७ ॥

एवमुच्छ्रये विप्रतिषिद्धे किं प्रकृतेरभाव एव भवतीत्यत आह —

कथं प्रकृतिरिति चेद् बाहुल्यात् ॥ २८ ॥

इति । पूर्वोक्तस्यैवोच्छ्रयस्य व्याधिनिमित्तत्वाद् विशेषस्य पर्यायेण प्रदर्शनार्थमित्युक्तव्याधिजनकोच्छ्रये सत्यपि प्रकृतिदोषस्य कथमुच्छ्रय इति चेद् बाहुल्याद् भवति । बाहुल्यं नाम कारणबाहुल्यम् । यथा पूर्वमुक्तं 'निषेकात् प्रभृतीत्येतस्मिन् वाक्ये । व्याधिजनकोच्छ्रयप्रकृत्युच्छ्रययोरयं पुनर्विशेषः — समानानीकजनितोऽभ्युच्छ्रयो व्याधिहेतुः स्वकारणबाहुल्यनिमित्ता प्रकृतिरिति ॥ २८ ॥

एवं व्यवस्थितायां प्रकृतौ कारणबाहुल्यनिमित्ते बाहुल्ये सत्यपि प्रकृतिदोषस्य कथं तद्बाहुल्यमदूषयन् व्याध्युच्छ्रयो भवतीत्युक्त आह —

बाहुल्येऽप्यनुच्छ्रयो यथासन्निवेशमवस्थानात् ॥ २९ ॥

इति । उत्पत्तिकालावस्थितबाहुल्यसन्निवेशविशेषेणैव सह व्यवस्थितो भूत्वा व्याधिजनकोच्छ्रयान्तरं गच्छतीति ॥ २९ ॥

एवं दोषोच्छ्रयस्य प्रकृतितां प्रसाध्य तस्य व्याधेः कारणत्वं च । अस्मिन् पक्षे पूर्वोक्तौ द्वौ दोषौ विद्येते, समत्वानुपपत्त्यवश्यव्याधिभावित्वात्* । स्यातयोरुद्धारार्थमिदमुच्यते —

उच्छ्रितोऽपि चाप्रकुपितो न विकारकरः सान्निपातिकी च न किञ्चिद् बाधते सति सर्वसाम्ये ॥ ३० ॥

इति । उच्छ्रये चावश्यभावी विकार इति नोपपद्यते, अप्रकुपितस्य विकारकरणाभावात् । प्रकृतिदोषस्य प्रकोपो नास्तीति उच्छ्रयविशेषवचनात् । तद्भावितत्वादित्यनेन चायमर्थः सिद्ध एव । अथापि सञ्चितस्य व्याधित्वं कस्मान्नेष्यते । स्तब्धपूर्णोदरतादयो भावा दुःखलक्षणास्तत्रोपलभ्यन्त इति । तस्मादन्यथा वर्ण्यते । पूर्वमुक्तं न । दोषः

* 'त्वात्' । तयो'रिति स्यात् ।

प्रकृतिरुच्छ्रितत्वाद् व्याधिजनकदोषवदिति उक्तस्य हेतोरसिद्धतामुद्भावयति। कथमिति। अदृष्टात्मकत्वादसत्परिकल्पितस्योच्छ्रयस्येत्युक्तं भवति। स्वकारणजनितत्वात्। उच्छ्रितोऽपि न दुष्टात्मना उच्छ्रित इत्यर्थः। सान्निपातिक्यपि सर्वसाम्ये सत्यपीति त्रयोऽपि दोषाः स्वकारणबाहुल्यजनितोच्छ्रया इति न परस्परापेक्षाकृतोच्छ्रया इति योऽर्थः॥

इदानीमस्याः प्रकृतेः कति भेदा इत्युक्त आह—

सप्त दोषतः सप्त गुणतः॥ ३१॥

इति। सप्त दोषप्रकृतयः प्रत्येकशस्त्रयः द्विकाश्च त्रयः एकः सन्निपात इति। सत्त्वरजस्तमांसि त्रयो गुणाः। तेऽप्येवं भेत्तव्याः। एवं गुणप्रकृतयोऽपि जन्मप्रभृत्युच्छ्रितेन गुणेन भवन्ति। गुणानां क्रोधहर्षादिष्वन्तराले वर्तमानेषूद्भूतवृत्तित्वं च कारणान्तराद् भवतीत्युक्तं वेदितव्यम्। आह चात्र—

"प्रकृतेः कारणं रूपमुत्पत्तेः काल एव च।
द्वौ पक्षौ प्रतिपेद्धव्यौ भेदश्चेत्यर्थसंग्रहः॥"

इति॥ ३१॥

एवं परीक्षिता प्रकृतिः। प्रकृत्यादिपूद्दिष्टस्य सन्निपातस्येदानीं परीक्षा क्रियते—

सन्निपाताप्रसिद्धिर्विरोधात्॥ ३२॥

वातपित्तश्लेष्मभिः क्रियमाणं सन्निपातं नाम तत्कार्यमधिकृ[illegible] [illegible]निध्यते दोषाणां विरोधः। वायुः शीतो रूक्षो लघुः, श्लेष्मा स्निग्धः शीतः [illegible] पित्तं रूक्षमुष्णं लघ्विति। एवं परस्परविरोधान्नैक कार्यमारभत इति। अथ प्रयोगः—न सन्निपातमारभन्ते वातपित्तश्लेष्माणः, परस्परविरोधाद्, अहिनकुलवत्॥ ३२॥

अयमप्युभयहेतुः—

अन्योन्यप्रशमनसामर्थ्यात्॥ ३३॥

पूर्ववत् प्रतिज्ञा दृष्टान्तश्च। अथवा परस्परविरुद्धाः हि[illegible]



नारभन्त इत्युक्त आह—अन्योन्यप्रशमनसामर्थ्यात् इति। एवं सति हेत्वर्थविवरणं कृतं भवति ॥ ३३ ॥

अयं चापरो हेतुः —

**सर्वेषु सर्वसम्भवात् ॥ ३४ ॥**

इति। सर्वेषु व्याधिषु संसृष्टसन्निपातप्रत्येकाख्येषु सर्वेषां दोषाणां सम्भवाद् विद्यमानत्वादिति। उक्तं हि—"सर्वे सवाताः सर्वे सपित्ताः सर्वे सकफाः"। इति

"एकश्च दोषः कुपितः सर्वानेव प्रकोपयेत्।"

इति च। कथमयं हेतुः सन्निपातस्याभावं साधयति। विपर्ययसाधनाद् विरुद्धसन्निपातत्वं नैव साधयति। सर्वेषां तस्य पक्षः सिद्धो भवतीति नायं साधनहेतुः। इह खलु त्रिविधो हेतुः— लक्षणहेतुरनुमानहेतुरुत्तरहेतुरिति। तत्र लक्षणहेतुरुष्णत्वादग्निः। उष्णलक्षणोऽग्निरित्युक्तं भवति। अप्रतिलक्षणत्वादाकाशमिति। अत्रापि तथा अनुमानहेतुः साधकः। उत्तरहेतुः पूर्वपक्षदोषवचनार्थः। कारणकार्यमसदेवोत्पद्यत इति स्थिते सदेवोत्पद्यते सिकताभ्यस्तैलोत्पत्तिप्रसङ्गादिति। नोत्तरपक्षे अवयवाः सन्तीति वचनाद् अयमप्युत्तरहेतुः सन्निपातलक्षणानिष्टप्रसङ्गनार्थः ॥ ३४ ॥

कथमिति, कोऽयं सन्निपातः, केन लक्षणेनास्य प्रत्येकव्याधेर्विशेषमुपलक्षयाम इत्युक्त आह —

**यस्मिन् व्याधौ त्रयो दोषाः सन्निपतिता भवन्ति, स खलु सन्निपातः ॥ ३५ ॥**

इति। यद्येवं सन्निपातप्रसिद्धिः, सर्वेषु सर्वसम्भवात्। इदं हि लक्षणं प्रत्येकं व्याधीनामपि सन्निपातत्वं साधयति। तत्र इष्टानिष्टपरिग्रहान्नेदं लक्षणमित्युक्तं भवति। आगमविरोधश्च भवति—"पृथग् द्वन्द्वैः समस्तैश्च दोषैरागन्तुश्चाष्टमो ज्वरः" इति वचनात् ॥ ३५ ॥

इदानीं लक्षणसङ्करपरिजिहीर्षया भवानेव मन्यत इत्याशङ्क्याह—

**तथाप्युच्छ्रयेणेति चेन्न यथोच्छ्रित इति वचनात् ॥ ३६ ॥**

इति। तथापि, यद्यपि सर्वेषु सर्वे सन्ति। यो यत्रोच्छ्रितो दोषः, तेन प्रत्येकव्याधिरन्याभ्यां संसृष्ट इति मनीषा स्यात्। तत्र,

सन्निपातस्य व्याधावभ्युच्छ्रयवचनात् शास्त्रे सन्निपातकृतायां शिरसो रुजायां यथोच्छ्रिते दोषे प्रतिकुर्वीतेति । अयमपि हेतुः साधारणत्वात् सर्वविष्टम्भकः ॥ ३६ ॥

पूर्वं सन्निपातभावप्रसाधनार्थं हेत्वन्तरमुच्यते—

स्थानानभिधानाद् रसतः प्रदेशतश्च ॥ ३७ ॥

इति । अयं तावद्धेतुः सन्निपातस्य दोषभेदाभ्युपगमपक्षे वैधर्म्येण साधनार्थम् । उक्तं कथमिति । नायं सन्निपातो दोषभेदः । यदि दोषभेदः स्याद्, रसतः प्रदेशतश्चास्य स्थानमवक्ष्यत् । यथा श्लेष्मणो दोषभेदस्य सतो रसतः स्थानं, मधुरं हि श्लेष्मणः स्थानमिति । देशतश्चोर्ध्वं हृदयादधो मस्तकाच्छ्लेष्मणः स्थानमित्युक्तं भवति । तथा वातपित्तयोश्च दोषभेदयोः प्रत्येकमुभयोरुक्तम् । एवं स्थानानभिधानान्नायं दोषभेदः । अदोषभेदत्वान्नास्ति सन्निपातः ॥ ३७ ॥

प्रचयप्रकोपकालस्य च ॥ ३८ ॥

इति । अयमपि हेतुः तथैव तस्योपचयार्थः । विद्यमानानां वातपित्तश्लेष्मणां वर्षाहेमन्तग्रीष्माः सञ्चयकालाः, शरद्वसन्तप्रावृट्संज्ञिताः प्रकोपकालाश्चाभिहिताः । यदि सन्निपातोऽभविष्यत्, सञ्चयप्रकोपकालाववक्ष्यत् । यस्मादेवं नावक्ष्यत्, तस्माच्च नास्ति सन्निपात इति ॥ ३८ ॥

एवं सन्निपाते प्रतिषिद्धे तत्साधनार्थमुच्यते —

सत्त्वरजस्तमसां कार्येण विरोधः प्रत्युक्तः ॥३९ ॥

इति । इह तावद् द्विविधा स्वपक्षस्थापना । पूर्वोक्तदोषोद्धरणं कृत्वा पश्चात् स्वपक्षसाधनं वा, स्वपक्षसाधनं कृत्वा वा पश्चादुक्तदोषोद्धरणं वेति । अत्रोक्तदोषोद्धरणं क्रियते । सत्त्वरजस्तमांसि सुखदुःखमोहात्मकत्वात् परस्परविरुद्धानि । तेषां कार्यं ब्रह्मादिस्तम्बपर्यन्तं जगत् । तस्य दर्शनाद् विरुद्धा एककार्यारम्भका भवन्तीति न युक्तम् । प्रत्युक्त इति प्रतिषिद्धः । तस्मादेतेऽपि दोषाः परस्परविरुद्धाः सन्निपातमारभन्त इति । एवं विरोधादित्यस्य हेतोरनैकान्तिकत्वमुद्भावितं ज्ञेयम् । नहि विरुद्धानामहिनकुलादीनामेककार्यारम्भकत्वं दृष्टम् । सत्त्वरजस्तमसां विरुद्धानामेककार्यारम्भकत्वं च दृष्टम् । एवं दर्शनात् किमेते दोषाः विरुद्धाः

सन्ता गुणवद्द्रव्यकार्यारम्भकाः, अथाप्तिनकुलवत्रारभन्त इति संशय-सामान्यस्यापि विरोधादिति हेतुरितरदपि दृष्टान्तान्तरमाश्रीयत इति ॥ ३९ ॥

अपामग्नेर्मातरिश्वनश्च ॥ ४० ॥

इति । अपां चाग्नेर्मातरिश्वनश्च कार्येण विद्युतां दोषाणां विरोधः प्रतिषिद्ध इति । एतान्यपि त्रीणि भूतानि परस्परविरुद्धानीति ॥ ४० ॥

इदमप्यपरं—

महाभूतानां शुक्रशोणितयोश्च ॥ ४१ ॥

इति । महाभूतानां कार्येण लोकेन द्रव्यादिना वा शुक्रशोणितयोः कार्येण गर्भेण दोषाणां विरोधः प्रत्युक्त इति । महाभूतानि च परस्परविरुद्धानि । वायुः शीतो लघुः समन्ततोगतिः, अग्निरुष्णो लघुरूर्ध्वगतिः, पृथिवी कठिना गुर्वी चाधोगतिमती, आपस्तु गुर्व्यस्तिर्यक्स्यन्दना अधोगतिमत्य इति । शुक्रशोणितयोर्विरोधा सौम्याग्नेयत्वात् । एवं बहुदृष्टान्तोपादानम् । सत्त्वरजस्तमोलक्षणेन दृष्टान्तेन प्रतिषिद्धे परेण तत्राप्यन्वयविरोधात् तैनरिध्वयं जगदन्येन हेतुनेति यदि ब्रूयाल्लोकप्रसिद्धदृष्टान्तप्रदर्शनार्थं विद्युदुल्कालोकाविरोधमपि यदि दृष्टः कुर्यादिति स्वसिद्धान्तप्रसिद्धगर्भदृष्टान्तः परिगृहीतस्तत्परित्यागोऽत एव न स्यादिति ॥ ४१ ॥

अन्योन्यप्रशमनं च विरुद्धानामभिदृष्टान्तैः प्रत्युक्तमिति विरुद्धाः सन्तः कस्मान्न प्रशमयन्तीत्यत्र हेतुं प्रदर्शयति —

दूषणस्वभावात् परस्परबलाधानात् सर्वेषामुदीर्णत्वाच्च ॥ ४२ ॥

इति । दूषणस्वभावा हि दोषा न शमनस्वभावा इति । वायुरनिलः शैत्येन पित्तस्यौष्ण्यं न शमयति, पित्तस्यौष्ण्यमपि तच्छैत्यम् । तथा श्लेष्मणो गौरवमुभयोर्लाघवं न शमयति । उक्तं हि —

“ विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वाद्विषं घोरमहीनिव ॥ ”

इति। अन्योन्योपकारकरूपेणैव परस्परं भजन्त इति। परस्परबला-धाना (दोनि? दिति।) यदा कुपितास्तदा परस्परस्योपकारायैव वर्तन्ते। यथा वायुर्यदा कुपितस्तस्य पित्तं तदारोग्ये वक्ष्यमाण उपकरोति। मार्गावरणं च करोति द्रवतया। वायुरपि पित्तस्य। तथा श्लेष्मणश्च पित्तं द्रवतयोपकरोति, श्लेष्मापि मार्गनिरोधद्रवताभ्यां वातपित्तस्येति। सर्वेषामुदीर्णत्वादिति। सन्निपातारम्भकाले हि सर्वे समुदीर्णाः कुपिताः। कः कं शमयति। एवमन्योन्यप्रशमनत्वे साधिते विरोधे सत्य एककार्यारम्भकत्वं सिद्धं भवति हि। अत्र प्रयोगः—न दोषाः सन्निपातारम्भे परस्परं प्रशमयन्ति दूषणस्वभावत्वाद् एकयोनि-विषद्वयवत्। विषं जङ्गमं स्थावरं शमयति स्थावरं जङ्गममिति चेत्। न, परस्परमिति विशेषितत्वात्। सर्पवृश्चिकलूतादीनां जङ्गमानां विषं परस्परं न शमयति। तथा वत्सनाभकालकूटादयश्च। अथापि जङ्गममूर्ध्वगतित्वादधोगतिलक्षणस्य स्थावरविषस्य क्रियां विरुणद्धि। तथा जङ्गमस्यापि स्थावरम्। उक्तं हि—

“स्थावरं स्यादधोभागमूर्ध्वभागं तु जङ्गमम्।
दंष्ट्राविषं विषं मौलं हन्ति मौलं च जङ्गमम्॥”

इति। पूर्ववत् प्रतिज्ञा, परस्परबलाधानात्, संभूयाभ्युत्थितारि-मण्डलवत्। पूर्ववत् प्रतिज्ञा, सर्वेषामुदीर्णत्वाद्, ग्रामघाताभिमुखा-नेकपुरुषा इव॥ ४२॥

सन्निपातलक्षणदूषणार्थस्य हेतोरुद्धरणार्थमाह—

सर्वेषु सर्वसम्भवो न तु सर्वविकारोऽन्यत्र रोगस्वभावात्॥४३॥

इति। सर्वेषु सर्वसम्भव इत्युक्तः न सर्वविकारः, तत्र विद्यमाना अपि दोषाः सर्वे विकारान्नोत्पादयन्ति। किं सर्वथेति। न। रोगस्वभावमात्रं मुक्त्वेति। कोऽयं रोगस्वभावः। सामान्य लक्षणं व्याधीनां दोषघट्टनोद्भूतदोषजनितम्। यथा वायुः कुपितः “एकश्च दोषः कुपितः सर्वानेव प्रकोपयेत्।” इति, पित्तश्लेष्माणौ कोपयति। तौ चानेन दोषघट्टनेन कुपितौ वायुना बलवताभिभूयमानौ न स्वकार्यव्याधिं निर्वर्तयतः। ततो वायुर्ज्वरमभिवर्तयतीति चेत्। पित्तं सर्वज्वराणां सामान्यलक्षणं

"सन्ताप" मात्रं करोति। श्लेष्मा च "निद्राधिक्यारतिगौरवा" दीनि पूर्वरूपाणीति ॥ ४३ ॥

एष रोगस्वभावो हि

तत्र सत्त्वरजस्तमोवृत्तिर्निदर्शनम् ॥ ४४ ॥

इति। दृष्टान्तेन समर्थयति। यदा सत्त्वं प्रीतिं निर्वर्तयति, तदानीं रजस्तमसी दुःखमोहौ न प्रवर्तयतः। यद्यपि विद्यते, न हि मे स्वावष्टब्धं सत्त्वं तिष्ठति। रजसा प्रवर्त्यमानं स्वकार्यं निर्वर्तयति। वृत्तिस्तेषां कार्योत्पादनं, वर्तनं वृत्तिरिति। तेन तेन भावेन परिणाम इति योऽर्थः ॥ ४४ ॥

इदानीं हेतुमुपदिशति—

न विकारजन्म बलवताभिभवात् ॥ ४५ ॥

इति। अस्य वाक्यस्यार्थः पूर्वमेवोक्तो वायोर्ज्वरकारणप्रति-क्रियायामिति न वर्ण्यते ॥ ४५ ॥

एवं सर्वेषु व्याधिषु सर्वदोषसम्भवेऽपि व्याधीनां प्रत्येकसंसर्गजानामसङ्करं प्रदर्श्य पुनरपि सन्निपातस्वरूपाभिधानेन तमेवार्थं स्फुटीकरोति—

यत्र सर्वविकारः स सन्निपातः ॥ ४६ ॥

इति। यत्र यस्मिन् शरीरप्रदेशे वा स सन्निपातः ॥ ४६ ॥

एवं युक्त्या प्रसाध्यागमेन दृढीकरोति—

दृश्यते वातरूपमिति समुच्चयात् ॥ ४७ ॥

इति। दृश्यते वातरूपं दृश्यते श्लेष्मरूपं सन्निपातात्। स खलु दुश्चिकित्स्यतमो भवतीति। अनेनैव तच्च वाक्यं गतार्थम् ॥ ४७ ॥

सन्निपातप्रत्येकव्याध्योर्विशेषो नोपलभ्यते, सर्वत्रोच्छ्रयोपलब्धेरिति पूर्वमुक्तस्य समीकरणार्थमाह—

सत्यप्युच्छ्रये सर्वविकारदर्शनात् सन्निपात एव ॥ ४८ ॥

इति। एकस्य दोषस्योच्छ्रये सत्यपि सन्निपातलक्षणस्य सर्वेषां विकारदर्शनाख्यस्य सद्भावात् सन्निपात एव। सन्निपातो हि द्विविधः—समसन्निपातो विषमसन्निपात इति ॥ ४८ ॥

विषमसन्निपातमधिकृत्यैतदुक्तं, सन्निपातकृतायामित्यादिस्थानानभिधाना-त्समस्ति सन्निपात इत्यस्योत्तरं—

विकारत्वात् सन्निपातस्य स्थानानभिधानम् ॥ ४९ ॥

इति। नहि सन्निपाताभावात् सन्निपातस्य स्थानमनभिहितम्। किं तर्हि। स्थाननियमाभावाद्, विकारत्वात् सन्निपातस्य स्थाननियमो नास्ति। भवता केवलं दोषसामान्यं गृहीत्वा चोदितमिति॥ ४९ ॥

दोषाः प्रकुपिता हि सन्निपतन्ति न समा इति प्रदर्शनार्थमाह —

स्वस्थवृत्तौ हि स्थानापदेशः ॥ ५० ॥

इति। स्वस्थस्य वृत्तमिदं कर्तव्यमिदं न कर्तव्यमिति। अत्र चेत् स्थानापदेशेन सम्बन्धो नास्तिस्वस्थे स्थापनापदेश इति न्याय्यं वक्तुम्। अथवा स्वस्थस्य चरितप्रकाशको ग्रन्थः स्वस्थवृत्तं, तद्योगात् ताच्छब्द्यमति। तत्रापि नास्ति स्थानव्यपदेशः। दोषाणामवस्था स्वस्थस्य वृत्तं न भवतीति। तस्मादेवं स्यात्— स्वस्थानां दोषाणां वृत्तिः स्वस्थवृत्तिः, प्रकृतिकर्मणि वृत्तिरिति, तस्यां वृत्तौ स्वस्थवृत्तौ वर्तमानानां, समानानामित्यर्थः। समानानां हि स्थाननिर्देशो दोषाणामिति ॥ ५० ॥

अथेदानीमनुक्तमपि सन्निपातस्य स्थानं सिद्धमेवेति प्रदर्शयन्नाह —

कारणदेशत्वात् कार्यस्य वातपित्तश्लेष्मस्थान एव सः ॥ ५१ ॥

इति। कारणस्य देश एव कार्यस्य देश इति। यत्र कारणं स्थितं स एव देशः कार्यस्यापीति। अथवा कारणस्य देश एव कार्यस्य देश इति यदि पूर्वं कल्प्यं कारणदेशदेशित्वादिति स्यात्, तस्मात् कारणप्रदेश एव कार्यं वर्तत इति। यथा तन्तुभिरारब्धः पटस्तन्तुप्रदेश एव वर्तते, यथा वीरणैरारब्धः कटो वीरणेष्वेवावतिष्ठते, एवं वातादिभिरारब्धः सन्निपातो वातपित्तश्लेष्मप्रदेश एव भवति। अत्र प्रयोगः— अत्र वातपित्तश्ले(ष्म ? ष्माणः) कारणद्रव्यसमवे(त ? ता) स्तत्कार्यत्वाद्, यत्र यस्य तत् कार्यं भवति तत्तत्कारणसमवेतमेव दृष्टं, तद्यथा पटस्तन्तुष्विति। कार्यत्वादित्ययं हेतुर्व्यभिचरतीति। यथा गुणाश्च गुणान्तरमिति गुणैरारब्धं गुणकार्यं स्वगुणकारणेन समवैतीति। नायं दोषो भवति, कारणद्रव्यसमवेतमिति विशेषितत्वाद् द्रव्याणामेवायं नियम इति। सञ्चयप्रकोपकालयोरनभिधानान्नास्ति सन्निपात इति यदुक्तं, तन्निषेधार्थमुक्तम् ॥ ५१ ॥

**कालः प्रायशो दृढमधिकारतश्च विभक्त उपलभ्यते हि प्रचयः सर्वदा सर्वेषाम् ॥ ५२ ॥**

कालः प्रायश इत्यादि। यः पुनरसौ परिकल्पितः कालो दोषाणां सञ्चयप्रकोपयोः कारणत्वेन ग्रीष्मादिः स एवं तावन्मुख्येन भवति। कुतः सन्निपातस्य सञ्चयप्रकोपकालानभिधानं स्यात् कथमिति। असौ वा अथ कारणसापेक्षं सर्वेषु कालेषु कारणसामग्यां सत्यां सञ्चयः स्यादिति ग्रीष्मादिकालमेव नापेक्षते, सर्वेषु कालेषु सञ्चयमुपगच्छति। एवं प्रकोपं च गच्छति। एवं प्रकोपश्च सर्वकालं षट्पदार्थसंयोगापेक्ष-योपलभ्यते सर्वेषां दोषाणाम्। तस्मात् कालो विभक्त उपचरितस्त्रिभि-र्हेतुभिः। प्रायशो दृढमधिकारत इति। तत्र प्रायश इति तस्मिन्नृतौ भृशं कुप्यन्ति, कालगुणसहायसद्भावात्। प्रकृतिकर्म च प्रयत्नसाध्यं भवति, अधिकारतः गुणाधिकारात्। तस्मिंस्तस्मिन्नृतौ ते ते गुणास्त-त्तद्दोषं तुल्याधिकारा भवन्तीति अधिकारादिति। तस्मिन् ऋतौ शेष-दोषयोरव्याधिकरत्वादिति। तथा ग्रीष्मे रौक्ष्यलाघवनिमित्तं वायुः प्रवर्धमानः कालगुणाधिकारादौष्ण्यात् पित्तेन सह वर्धते, न तथाप्यन्य-कालेष्विति। तस्मादेवं प्रसिद्धकालाभावात् सन्निपातस्यापि सञ्चय-प्रकोपकालानभिधानमिति परीक्षितः सन्निपात इति।

इदानीं दोषाणामग्नेश्च स्थानं पूर्वमुद्दिष्टं परीक्ष्यते —

**स्थानाभावः सर्वत्र सर्वेषामुपलब्धेः ॥ ५३ ॥**

इति। स्थानाभाव इति परिच्छिन्नविषयस्य स्थानस्याभावो वा स्यात्, सर्वथा स्थानाभावो वा। सर्वस्थानाभावश्चेत्, सर्वत्र सर्वेषा-मुपलब्धिरित्ययं हेतुर्न स्यात्, "दध्नि सर्पिः व्यवस्थित" मिति। तस्माच्छास्त्रे यच्छरीरप्रदेशे परिच्छिन्नं स्थानं, तदेवात्र पक्षीक्रियत इति। यथा नाभेरधस्तात् पादतलादूर्ध्वं वातस्यायतनमित्यादि। एत-देवास्य वायोः स्थानं यदि स्यात्, तत्रैव स उपलभ्येत। नैवोपल-भ्यते। अन्यत्रापि शरीर उपलभ्यते। उन्मीलननिमीलनोच्छ्वासनाद्या ऊर्ध्वमुपलभ्यन्ते वायोर्गुणाः, "ओजोनैक पूरणं क्लेदवृद्धि" रित्ये-वमादीनि श्लेष्मकर्माण्यधः काये चोपलभ्यन्ते। "पक्तिप्रकाशरञ्जनोष्मा" दय इति पित्तस्य सर्वत्रोपलभ्यन्ते। तस्मात् सर्वत्र सर्वेषां दोषाणामु-

पलब्धेरेतान्युद्दिष्टानि स्थानानि न भवन्ति। वैधर्म्येणायं प्रयोगः— यथा यद् यस्य स्थानं भवति, स तत्रैवोपलभ्यते। यथाक्षिरोगोऽक्ष्ण्येव। न तथोलभ्यन्ते तत्र वेति नैकत्र दोषस्थानमिति। एवं साधर्म्यं प्रयोगः स्यात्— नोद्दिष्टशरीरप्रदेशस्थाना वातादयः, सर्वत्रोपलब्धेः, यत् सर्वत्रोपलभ्यते, तस्य निर्दिष्टस्थानाभावो दृष्टः। यथाकाशस्येति ॥ ५३ ॥

इदमपि स्थानाभावे हेत्वन्तरं —

तन्मयत्वात् कायस्य ॥ ५४ ॥

इति। तन्मयत्वाद् दोषमयत्वाद्। दोषमयो हि कायः "दोषधातुमलमूलं शरीर"मिति। (यद् यन्मयं तस्मिंस्तस्य स्थानविशेषो नास्ति)। मृन्मये घटे मृद् इव। अत्र तच्छब्दः कथं दोषानाक्षिपति। अनन्तरस्य विधिर्वा प्रतिषेधो वेति अनन्तरनिर्दिष्टं स्थानं दोषाणां स्थानं प्रकृतमित्यदोषः ॥ ५४ ॥

अयं चापरो हेतुः —

सर्वसरत्ववचनाच्च ॥ ५५ ॥

इति। स्थानाभाव इति संबन्धः। सर्वसरास्तु वातपित्तश्लेष्माण इति तन्त्रे वचनाद्। यदि सर्वत्र प्रसर(णा)दिति, कथं प्रदेशनियम इति। सर्वसरत्वात् कालवदिति योज्यम् ॥ ५५ ॥

इदानीमग्नेः स्थानाभावं साधयति

अग्नेरपि पाकदर्शनाद् धातुषु ॥ ५६ ॥

इति। अग्नेरपि स्थानाभावः। अपिशब्दः समुच्चयार्थः। धातुषु धात्वन्तरेषु पाकदर्शनात् पाककार्यदर्शनादिति योऽर्थः। अग्नेरपि नाभिपक्वाशयान्तरसंज्ञितं स्थानं प्रतिषिध्यते। नाग्निरसंबद्धं दहति। यदि नाभिपक्वाशयान्तरस्थः स्यादग्निस्तेन धातूनां पाको नोपपद्यते, धातुभिरसंबद्धत्वात्। न ह्याहवनीयोऽग्निर्वनस्थं दारु दहति। तस्मात् तत्कार्यस्याग्निसान्निध्यस्य धातुषु पाकस्य दर्शनात् जानीमोऽत्राप्यग्निर्धातुषु सन्निहित इति। (क ? त)स्मान्न नाभिपक्वाशयान्तरमेवाग्नेः स्थानं भवति ॥ ५६ ॥

इदानीमापातप्रयोगेण धात्वन्तरेष्वग्नेः स्थानं साधयिष्यति—

अन्यथा ह्युत्तरोत्तरस्य धातोरभावः ॥ ५७ ॥

इति । अन्यथेति । यदि धात्वन्तरेष्वग्नेः स्थानं न भवति, धातुविवेककारणपाकाभावादुत्तरोत्तरधात्वभावप्रसङ्गः स्याद् इति, उत्तरोत्तरधातव एव न स्युरित्यर्थः ॥ ५७ ॥

अनेनाग्नेः स्वलक्षणहेतुना सर्वगतत्वं साधयति —

उष्णत्वादग्नेः सर्वगतत्वाच्चोष्मणः ॥ ५८ ॥

इति । उदर्यो भगवानग्निरुष्णस्वभावो न ज्वालाङ्गारप्रकाशनधूमधर्मः । तच्चौष्ण्यं सर्वत्र कायप्रदेशे चाभ्यन्तरेषु च मूत्रोच्चारादिषूपलभ्यत इति नास्त्यग्नेरेकत्रैव स्थाने स्थितिरिति ॥ ५८ ॥

इह दोषाणां द्विविधं स्थानं मूलस्थानं गोचरस्थानं चेति । तत्र सर्वशरीरं गोचरस्थानं दोषाणां, शरीरप्रदेशाः खलु परिच्छिन्ना मूलस्थानम् तत्रापि—

सर्वात्मनावस्थानं स्वस्थानामप्रकुपितानाम् ॥ ५९ ॥

सर्वात्मना सर्वावयवैरवस्थानं भवति दोषाणां, किं सर्वकालं, नहि, अप्रकुपितानां स्वस्थानामिति "स्वस्थवृत्तौ हि स्थानापदेशः" इति विशेषितत्वात् पूर्वं च ॥ ५९ ॥

इतरत्र पुनरेकदेशेन वृत्तिः ॥ ६० ॥

इतरत्रान्यत्र शरीरप्रदेशे । पुनःशब्दो वाक्यालङ्कारार्थः । एकदेशेन वृत्तिः अवयवात्मना वृत्तिः तेन तेन व्यापारेण । एतदुक्तं भवति — अन्यत्र वृत्तिश्च दोषाणामिष्यते स्वस्थानस्थितिश्च । अनया प्रक्रियया भवता परिच्छेदरूपं गृहीत्वा चोदितमिति ॥ ६० ॥

सर्वत्र सर्वोपलब्धिर्न स्थानाभावाय ॥ ६१ ॥

इति । ॥ ६१ ॥

किञ्चान्यत् —

नास्त्येव स्थाननियमः प्रकुपितानाम् ॥ ६२ ॥

( प्रकुपितानां ) हि दोषाणामिदमेवास्य स्थानमिति नियमो नास्ति । अस्य वाक्यस्यात्र कः संबन्धः । प्रकुपितानां दोषाणां स्थानमस्तीति किमिह प्रस्तुतम, अ(स्ति ? प्र)कुपितानामिति पूर्ववाक्ये विशेषितत्वात् प्रकुपितानां कथमिति संशयव्युदासार्थमुक्तमिति चेद्, न । अर्थापत्तेरेव सिद्धत्वात् । अर्थापत्तिसिद्धस्य पुनर्वचनेन पुनरुक्तदोष इति युक्तमेतत । आर्तवगुल्मस्तु स्त्रीणामेव न पुंसामिति ॥ ६२ ॥

यथास्थानमभ्युपगच्छतां दोषाणां प्रकोपप्रशमौ न स्त इति सिद्धान्तविरोधं दर्शयन्नाह —

स्थानाभावेन प्रकोपो न प्रशमः ॥ ६३ ॥

इति। स्थानच्च्युताः प्रकुपिता इत्युच्यन्ते पुनश्च तस्मिंस्थाने निर्विकारं स्थिताः शान्ता इत्युच्यन्ते।

"स्थानादुन्मार्गगमनं प्रकोपः परिकीर्तितः।"

इति वचनात् ॥ ६४ ॥

एतदुक्तं विधानमयुक्तमिव मन्यमान आह —

स्वस्थान एव विकारकरणादसम्यक् ॥ ६५ ॥

इति। आत्मनः स्थान एव दोषाणां व्याधिकरणं दृष्टं, यथा वातस्थाने वातगुल्मः, श्लेष्मस्थाने श्लैष्मिको हृद्रोग इति। अनेन हि वाक्येन द्वौ पक्षौ प्रतिषिद्धौ — दोषाणां स्थानात् प्रच्युतिः प्रकोप इति, अविकृतिरूपेणैव स्वस्थाने इति ॥ ६५ ॥

अप्रकुपितस्य दोषस्य व्याध्युत्पादनेशक्तिर्नास्ति, स्वस्थाने व्याधिश्च दृश्यते। प्रच्युतिश्च नोपपद्यत इति स्थानात् प्रच्युतेरेव प्रकोपत्वप्रसाधनार्थं स्वस्थानव्याधिजनकप्रक्रियाप्रसाधनार्थं चाह —

शेषप्रकोपात् ॥ ६६ ॥

इत्यादि। एतेषां श्लेष्मप्रकोपादीनां त्रयाणां हेतूनां दर्शनात् स्वस्थानाच्च्युत एव दोष इत्यनुमीयते शेषप्रकोपादिति।

"एकश्च दोषः कुपितः सर्वानेव प्रकोपयेत्।"

इति वचनात्। यदासौ वायुः कुपितः स्वस्थानाच्च्युतः, शेषौ पित्तश्लेष्माणौ तत्स्थानमसंप्राप्य कथं कोपयति, तयोः कोपदर्शनादवश्यं स्वस्थानान्निष्क्रम्य गत इत्यनुमीयते। एवं प्रकुपितः शेषौ च कोपयित्वा प्रसरावस्थां गत्वा जहत्प्रसरावस्थ एव सन्नात्मस्थाने स्थानसंश्रयं करोति। ततो व्याधिं स्वस्थानेऽभिनिर्वर्तयति। सञ्चयादीनां स्वरूपदर्शनार्थमयमागमः —

"स्वस्थानवृद्धिर्दोषाणां चय इत्यभिधीयते।
स्थानादुन्मार्गगमनं प्रकोपः परिकीर्तितः ॥"

इति।

"सर्वदेहानुसरणं प्रसरं भिषजो विदुः।
देहैकदेशाश्रयणं स्थानसंश्रयणं विदुः॥"

इति। एवं शोषप्रकोपाच्च स्थानात् प्रच्युत एवायं दोष इति जानीमः। अत्र प्रयोगः—सञ्चयप्रकोपः प्रसरपूर्वकमेव स्थाने व्याधिं जनयति, दोषशोषदोषप्रकोपदर्शनात्, ज्वरादाविव॥ ६६॥

चलनाच्च ॥ ६७ ॥

स्थानाच्च्युत एवेति वचनं पूर्वावस्थातो विकृतिप्राप्तिः। सा च साम्यावस्थस्य न संभवतीति॥ ६७॥

स्वस्थवृत्तिप्रसङ्गाच्च च्युत एव ॥ ६८ ॥

प्रकृतिकर्माभावादिति योऽर्थः। पूर्ववत् प्रयोगः॥ ६८॥

तन्मयत्वात् कायस्येत्युत्तरस्योत्तरं —

भौतिकः कायो दोषाश्च ॥ ६९ ॥

न दोषमयः कायो भौतिकः, दोषाश्च भौतिका इति। तन्मयत्वादित्ययं हेतुरसिद्धो भवतीत्युक्तं भवति॥ ६९॥

दोषमयत्वे शरीरस्य दोषाः कारणं, शरीरस्तु कार्यं स्यात्, तन्नोपपद्यत इति प्रदर्शनार्थमाह —

सह जायन्त इत्यभिधानात् ॥ ७० ॥

इति। शास्त्र इत्यर्थः। त एव दोषाः प्राणाश्च तैरेव सह जायन्त इति। अवश्यं हि कार्यकारणयोः कालभेदेन भवितव्यं, पूर्वकालीनं कारणं पश्चात्कालीनं कार्यमिति। अत्र प्रयोगः — न दोषाः कारणं शरीरस्य, सहोत्पन्नत्वात्, सव्येतरगोविषाणवत्॥ ७०॥

अन्योन्यस्य सर्वसरत्ववचनादित्यस्योत्तरं —

सर्वसरत्ववचनादेव स्थानप्रसिद्धिः ॥ ७१ ॥

इति। पूर्वं सर्वसरशब्दः सर्वगत इति व्यापित्वार्थं गृहीत्वा चोदितम्। इदानीं सरशब्दस्य देशाद् देशान्तरगमनतामङ्गीकृत्योच्यते यस्मात्। स्थानान्निस्सृत्य स्थानान्तरगमनं सरत्वमिति स्थानप्रसिद्धिः स्यादिति॥ ७१॥

एवमुक्तदोषोद्धरणं कृत्वा स्थानप्रसिद्ध्यर्थं विशेषधर्मानाह —

बाहुल्येनोपलब्धेस्तत्र तत्र ॥ ७२ ॥

बाहुल्येनोपलब्धेरित्यादि । तत्र तत्र तस्य तस्य दोषस्य स्थाने बाहुल्येनोपलब्धेः स्थानप्रसिद्धिरिति । नाभेरधस्तादेव वायुर्बाहुल्येनोपलभ्यते । कण्ठे मुखे च श्लेष्मा । ऊष्मदाहादयश्च हृदयस्याधस्तादिति ॥ ७२ ॥

तदीयानां प्रायशस्तत्रैवोत्पत्तेः ॥ ७३ ॥

तदीयानां च व्याधीनां प्रायशस्तत्रैवोत्पत्तेः स्थानप्रसिद्धिः । तदीयास्तस्य तस्य दोषस्य कार्यभूता व्याधयः (वातव्याधयः) प्रायशो नाभेरधस्तादुत्प- द्यन्ते । एवं शेषयोरपीति ॥ ७३ ॥

साधनविशेषात् ॥ ७४ ॥

साधनं चिकित्सा, स्वस्थानगतस्य वायोः प्रयत्नेन चिकित्सा क्रियत इति । स्थानबलं विद्यत इत्यभिप्रायः । नायं साधनविशेषः स्थानापेक्षयैवेति वक्तुं न शक्यत इत्यन्यथा वर्ण्यते — स्थानापेक्षया चिकित्साविशेषदर्शनादस्ति स्थानमिति प्रतिपद्यामहे । यथा श्लेष्मस्थानगतस्य वायोः श्लेष्मवत् क्रियाविभागः पित्तस्थानगतस्य पित्तवदित्यादि ॥७४ ॥

विदाहाभिप्रसादरसविशेषेभ्यश्च स्थानवृद्धिः ॥ ७५ ॥

इति । विदाहविशेषात् मधुराम्लकटुकविदाहविशेषात् । षड्रसोप्याहार उपयुक्तस्य दोषस्य स्थानमासाद्य विदह्यमानो दोषरसभावितस्थानरसेनाभिभूतस्तत्स्थानस्थितदोषरसेन वाभिभूतो मधुरादिरुपपद्यत इत्यागमानुसारेण जानीमः । उक्तं हि — "सर्वं ह्यन्नपानमेवं पच्यमानं स्वे स्वे स्थाने श्लैष्मिकं पैत्तिकं वातिकं वा स्यात् । विदाहे . . हस्यैतन्मधुरमम्लं कटुकं वा रूपं भवती"ति । अभिप्रसादविशेषः प. . भौतिकोऽप्याहारः पाञ्चभौतिकस्य शरीरस्योपकारं कुर्वाणः सदृशं सदृशेन पोषयति । एतेन सान्निध्यं विना नोपकरोतीति तत्रैवोपकारदर्शनात् तस्य तदेव स्थानमिति जानीमः । उक्तं हि—"विविधमशितपीतलीढखादितविपाकं तत्र पच्यमानं मधुरीभूत्वा श्लेष्माणमम्लीभूत्वा पित्तं कटुकीभूत्वा वातमभिप्रसीदति रसविशेषादि"ति । मधुरं हि

श्लेष्मणः स्थानमम्लं पित्तस्य कटुकं वातस्येति। अथवा रसविशेषादिति। बाह्ये मृगपशुपक्षीणां शरीरप्रदेशे पूर्वकायापरकायमध्यकायानां रसविशेषदर्शनाद् व्यवस्यते दोषस्थानकृतोऽयं रसविशेष इति। एवं सति कथं जाङ्गला मधुरा इत्यादिना सामान्यरसनिर्देशेन विरोधो न स्यात् इति। न किञ्चिद् विशेषान्तरं गृहीत्वा गुणसारूप्येणोक्तमिति ॥ ७५ ॥

इदानीमग्निः—

एतेनाग्निर्व्याख्यातः ॥ ७६ ॥

अनेनातिदेशेनाग्निर्व्याख्यात इति। एतेनोक्तेन दोषाणां स्थानप्रसिद्धिहेतुनाग्निरपि व्याख्यातः। यथाग्निरपि सर्वात्मना मूलस्थाने स्थितोऽप्रकुपितः स्वैरवयवैः सर्वत्र धात्वन्तरेषु पाकाय वर्तते। एवं धातूनामुत्तरोत्तराणां भावश्च न भवति, स्थानाभावेन प्रकोपो न प्रशमश्चाग्नेर्भवतीत्येवमादि यदिह सम्भवति, तद् योज्यमिति ॥ ७६ ॥

स्थाने परीक्षितम् आरोग्यप्रायमित्युद्दिष्टम्। तत्रारोग्यमेव न सम्भवति। कुतः पुनस्तत्प्रायत्वमित्याह—

समवातपित्तश्लेष्मत्वाभावः प्रकृतेरुद्रेकात् ॥ ७७ ॥

इति। समवातपित्तश्लेष्मत्वमारोग्यमिति प्रसिद्धं तन्त्रेष्विति कृत्वैवमुक्तम्। आक्षेपस्यावकाशप्रदर्शनार्थं वा। उक्तं हि—

"समेषु यात्रा भवति सम्यगाचरतां सुखम्।
विषमेषु भवेद् व्याधिर्वैषम्यं विषमाशनात् ॥"

इति। वातपित्तश्लेष्मसाम्यलक्षणस्यारोग्यस्य सर्वकालं सम्भवन्तीं कल्पनां मनसि कृत्वोक्तोऽयं हेतुः प्रकृतेरुद्रेकादिति। प्रकृतेः प्रकृतिदोषस्य सर्वकालमामरणात् स्थितिरिष्यत इति। इयं हि प्रकृतिदोषोच्छ्रयस्थितिः साम्ये सहवर्तिनी न भवतीति। अत्र प्रयोगः—समकालं वातपित्तश्लेष्माणः साम्यलक्षणसमुदायात्मकाः स्वसमुदायादन्यतरप्रकृत्युच्छ्रयसमन्वितत्वाद् विषमं निपातवत् ॥ ७७ ॥

मानोन्मानयोरनुपलब्धेः ॥ ७८ ॥

इति। तत्साम्यपरिच्छेदके साधनाभावात् साम्याभावं प्रदर्शयितुमुक्तम्। इह त्रयाणां साम्यपरिच्छेदे मानमुन्मानं वा साधनं स्याद्। अत्र नोभयं क्रमते, वायोररूपत्वात्। उष्णात्मकत्वात्

पित्तस्य। अथापि शारीरान्तर्गतत्वात् तयोरविषयं मानं प्रस्थादि। उन्मानं तुलादि। दण्डरज्ज्वादीनां मानोन्मानसाधनानामवचनमतद्विषयत्वात्। अयं चापरो हेतुः साम्याभावाविष्करणार्थः॥ ७८॥

यथर्तुदोषाणां प्रचयात् प्रकोपाच्च॥ ७९॥

दोषाणां प्रचयप्रकोपावृतावुक्तौ। एवं षडृतवः सञ्चयप्रकोपयोः कारणत्वेन निर्दिष्टाः। सप्तमस्य दोषसाम्यहेतोः कालस्याभावाद् दोषाणां साम्यं नास्ति। आह हि—

"हैमन्तिकं दोषचयं वसन्ते
प्रशमं तथैव प्रणुदेत् प्रवृष्टे।
वर्षाकृतं सञ्चयमुल्बणं तं
प्रवाहयेत् पूर्वहिमेषु दक्षः॥"

इति। दिवसभागक्रमेण दोषाणां चयप्रकोपावृत्ववदह्नो दिवसा इति नोक्तौ, ऋतुतुल्यत्वादनेनैव गतार्थत्वाच्च॥ ७९॥

समाधिकत्वकलापञ्चत्वे इत्यादिना च दोषसाम्याभावं प्रदर्शयति—

समाधिककलापञ्चत्वसर्वातिदेशैर्वातबाहुल्यात्॥ ८०॥

समाधिकत्वेन च कलापञ्चत्वेन च सर्वातिदेशेन च वायोर्बाहुल्यादाधिक्यात् समवातपित्तश्लेष्मत्वाभाव इति। तत्र समाधिकत्वेन पित्तं वातसमाधिकं, श्लेष्मा वातसमाधिको, मांसशोणितं वातसमाधिकं, मेदोमज्जशुक्रं वातसमाधिकम्, अन्नपानस्य रसो वातसमाधिक इति। एवं सर्वं वातायत्तमिति वायोर्बहुविषयत्वादाधिक्यमनुमीयते। तस्मात् तस्याधिक्यात् सर्वकालं कथं त्रयः समा भवन्तीति। कलापञ्चत्वं, कलांशाः प्राणादयः। एवं चाधिको वायुः। सर्वातिदेशः सर्वेभ्यः श्रेष्ठ इति वचनम्। यथा—

"पित्ततः श्लेष्मणश्चैव वायुं श्रेष्ठतमं विदुः।
न हृते मारुतात् कोपो विद्यते कफपित्तयोः॥"

इति। एवमेकस्य वायोर्बाहुल्ये साधिते शेषयोरबाहुल्यं सिद्धमिति साम्याभावः सुतरां भवतीति॥ ८०॥

अस्माकं तावत् प्रतिज्ञार्थमनवबुद्ध्यैव भवतायं चोदनाप्रसरोऽभिहित इत्येतस्य प्रदर्शनार्थमाह —

समत्वमवस्थानं स्वकर्मसु ॥ ८१ ॥

इति । इह तावद् भावानां सन्निवेशविशेषकृतं परस्परापेक्षं साम्यं विद्यते । तदिहास्माभिर्नेष्यते । अस्माभिर्दोषाणां स्वकर्मस्थितिः साम्यमित्यभिधीयते इति । यद्येवं पारिभाषिकीयं संज्ञा साम्यमिति, भवतु, किन्तु आगमेषु लिङ्गया भवितव्यमिति । बाढम् । उक्तं हि —

दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति पृथक् पृथक् ।
त्यजन्ति हीनाः स्वं लिङ्गं समाः स्वं कर्म कुर्वते ॥ ''

इति । स्वकर्माणि पुनः, स्वस्थानां कर्माणि स्वकर्माणि । कथं,

"चेष्टाविवेकः पवनं विवृद्धिः
स्वस्थस्य कर्माण्यनिलस्य विद्यात् ।
विद्याप्रकाशो रजनं तथोष्मा
निवृत्तिरिष्टावयवस्तथैव ॥
तेजस्तथा लोचनशोषणं च
पित्तस्य कर्माणि भवन्ति नित्यम् ।"

"ओजोनैकं पूरणं क्लेदवृद्धिः
शैत्यं बन्धः श्लेष्मणो मांसवृद्धिः ।
रक्ते शैत्यं सौकुमार्यं च जन्तोः
कर्माण्युक्तानीह नित्यं कफस्य ॥"

इति । एवमेतानि दोषाणां स्वाभ्युदयकरत्वात् कर्माणीत्युच्यन्ते, वर्णानां स्वकर्मवत् । अनेन मानोन्मानयोरनुपलब्धेरित्ययं हेतुर्निर्लुठितः । प्रकृतेरुद्रेकादित्ययं हेतुः प्रकृतिचिन्तायामेव कृतप्रतिविधान इति नोक्तः । तत्र हि तद्भावितत्वात् प्रकृतिदोषनिमित्तं विकारा न भवन्तीत्यादि ॥८१॥

दोषाणां स्वकर्मानुष्ठानं समत्वमित्यस्य न केवलं पारिभाषिकमेवाभिधानम्, अन्वर्थञ्च भवतीति ज्ञापनार्थमुक्तं —

तस्मादपरिवृद्धेश्चापरिहारेण च ॥ ८२ ॥

इति । तस्मात् स्वकर्मानुष्ठानलक्षणात् साम्यादपरिवृद्धेः स्वावयवाभ्युच्चयो वृद्धिः पूर्वावस्थाया विकारजन्म, तस्या वृद्धेरभावादपरिहा-

रेणपरिक्षयात् । समत्वमिष्टमित्यर्थः । एवं क्षयवृद्ध्यवस्थापेक्षया सममित्युच्यते समदोषस्थितिरुभयं वैषम्यमिति ॥ ८२ ॥

यथर्तुदोषाणां प्रचय इत्यस्योत्तरम् —

ऋतुसात्म्यसेवनान्न प्रकोपो न प्रचयः ॥ ८३ ॥

इति । ऋतुषु हि दोषास्तद्गुणोपलम्भात् वृद्धिं गच्छन्ति, तद्गुणप्रतिपक्षाहारसेवनात् तदा स्वस्थस्य दोषाणां चयप्रकोपौ न स्त इति । सात्म्यं पथ्यम् ऋतौ पथ्यमृतुसात्म्यम् । एवमनेन भिषक्-परिपालितः स्वस्थः परिगृहीतः । गर्भात् प्रभृति भिषग्भिः परिपाल्यमानस्य कालनिमित्ताश्च न भवन्तीति । यादृच्छिकस्य खलु स्वस्थस्य यदृच्छया वर्तमानस्य तत्कालगुणोपलम्भाद् दोषाः सञ्चयमुपगच्छन्ति । तस्यारोग्यसाधनार्थमृतुसन्धिषु क्रियाविधानमुक्तमायुर्वेदेषु । यथा —

"ऋतूनपेक्ष्य दोषास्तु स्वस्थे वातादयस्त्रयः ।
उष्णवर्षहिमाख्येषु वृद्धिं गच्छन्ति तद्गुणाः ॥
तस्मात्तान्निर्हरेद् वैद्यो दाता देहसुखायुषाम् ।
प्रावृट्च्छरद्वसन्तेषु बस्तिस्रंसनमर्दनैः ॥"

इति । अपिच,

"देयास्त्रयस्त्रीन् दिवसान् बस्तयः स्नेहबस्तयः ।
स्वस्थवृत्ते विरिक्तस्य व्याधौ व्याधिवशेन च ॥"

इति । स्वस्थे भिषक्परिपालिते च प्रकृतिस्वस्थे च सर्वाः क्रियाः प्रतिषिद्धा एव । उक्तं हि—

"समत्वाद् धातुदोषाणां मलानां चाविकारतः ।
स्वस्थस्य प्रीतमनसो न क्रियाभिः प्रयोजनम् ॥"

इति । गुलिकाञ्जनादिभोजनान्तं विधीयमानं यत् स्वस्थवृत्तं तत् किमर्थमिति ।

"विहाराहारहेतूनामृतुकालोपजन्मनाम् ।
दोषाणां शमनार्थाय स्वस्थकर्म विधीयते ॥
शयनस्थानगमनस्नानपानाशनादिभिः ।"

इति । भिषक्परिपालितयादृच्छिकस्वस्थद्वयप्रकाशनार्थमागमश्च प्रदर्श्यते—

"षण्णामृतूनां तु यथाविभागं यथाप्रयोगं च निवर्तनेषु ।
विभज्य भुञ्जीत बलाबलानि स्नेहादिभिश्च प्रतिकारयेत ॥" इति ।

अत्र ऋतूनां निवर्तनेषु ऋतुसन्धिषु ... बलान्यवेक्ष्य भुञ्जीतेति विधानमेतद्धितं मिताहारस्य भिषक्परिपालितस्य स्वस्थस्य तेष्वेवर्तुनिवर्तनेषु। विभज्य तु स्नेहादिभिश्च प्रतिकारयेतेति यादृच्छिकस्य दोषसञ्चयव्युदासार्थमिति। अन्यस्मिन्नपि तन्त्र उक्तं —

सकपिञ्जललावकवर्तकं यत् सकपोतं सहतैत्तिरं सुगन्धि।
सैणं सहशाशशार्षतं वा मृगमांसोपहितं ससर्पिरुष्णम् ॥
एतद्धितमश्नतः प्रवृद्धं यत्काये मलमान्तरं पुराणम्।
अनुलोमविरेचनातियोगात् तच्छोध्यं सुखमिच्छता नरेण ॥

वमनं च विरेचनं च काले
नस्तःकर्म च वस्तिकर्म चैव।
अभ्यञ्जनमञ्जनं च सेव्यं
स्नेहस्वेदविधिश्च युक्तियुक्तम् ॥

"रूपदाहननानुलेपनं च स्नानं चङ्क्रमणं च देशकाले।
अन्याश्च मृजा यथोपलम्भं वृद्धानामनुशासनं च कार्यम् ॥"

इति। अत्राप्येतद्धितमित्येतद् भिषक्परिपालितस्य, स्नेहस्वेदविधिश्चेत्यादि चरितं यादृच्छिकस्य, पदाहननानुलेपनादि उभयोरविरुद्धमिति। अन्यच्छेषं स्वस्थाश्रितं स्वरूपभेदलक्षणसाधनाधिकृतं, सर्वमस्मद्विहितस्वस्थप्रकरणादवगन्तव्यम् ॥ ८३ ॥

इदानीं समाधिककलापञ्चत्वमित्यस्योत्तरम् —

सन्धिश्लेषणत्वाच्छ्लेष्मणस्तयोरपि बाहुल्यात् ॥ ८४ ॥

सन्धेः श्लेषणकर्मत्वाच्छ्लेष्मणः सन्धीनां बहुत्वाच्छ्लेष्मणः स्थानानि बहूनीति तदवयवानां बहुत्वं सिद्धम्। तस्मान्न वायोरेवैतद्विशेषान्तरमिति, पित्तकृतत्वात् श्लेष्मणः। तयोरपि बाहुल्यात्, तस्य च सर्वगतत्वात् बाहुल्यं न वायोरेवेत्युक्तं भवति ॥ ८४ ॥

एवमागमेषु सम्यगपरीक्षितानि वस्तूनि पृथक् परीक्षितानि। इदानीं प्रकृत्यादिष्ववेक्षणीयेषु युगपदेकस्मिन् व्याधौ सन्निपतितेषु विरुद्धेषु का प्रतिपत्तिरित्याह —

प्रकृत्यादीनां परस्परविरोधेऽनुविधेयं ब्रुवते बाहुल्यम् ॥ ८५ ॥

इति। अवेक्षणीयेषु प्रकृत्यादिषु परस्परविरुद्धेष्वेकस्मिन्

व्याधौ बाहुल्यमनुविधेयं ब्रुवते केचिद् । बहुभिर्विरोधो यथा न स्यात् तथा कर्तव्यमिति । कथं विरोध इति । व्याधिर्ज्वरः । पुरुषः पित्तप्रकृतिः । स च पैत्तिकः । देशस्त्वानूपः । कालो हेमन्तः । अग्निर्मन्दः । वयसा च प्रथमः । शारीरेण कृश इत्यादिव्याधिप्रकृत्यपेक्षया शीतस्निग्धमधुरोपक्रमे प्राप्ते देशकालाग्निशारीरवयोभिर्विरोधः । तस्योपक्रमस्य(तर्हि) पित्तज्वरः पित्तप्रकृतिरिति द्वौ विशेषौ शीतोपक्रमार्हौ । यद्यप्यर्हौ, बहुभिर्देशादिभिर्विरोध इति कृत्वा तदविरुद्धेन मार्गेण तत्र कर्तव्यमिति ॥ ८५ ॥

बहुभ्यो विरुद्धेभ्यो यस्त्वेतेषु गरीयान् भवति, स एवानुविधातव्य इति प्रदर्शयन्नाह —

गरीयस्त्वेकमपि प्रतिहारो बाहुल्यात् ॥ ८६ ॥

एकमपि प्रकृत्यादिषु प्रतिहारो बाधकः, बाहुल्यात् । तदपि न गरीयः, पुनरवस्थापेक्षमित्येतद् वाक्यं नारब्धव्यं, प्रतिहारताव्यवस्था पूर्वमुक्तेति । सत्यमेतत् । तथापि बहुत्वमपेक्षणीयमिति यस्यायं पक्षः, तस्येदं वाक्यम् । प्रतिहारत्वं बाधकमवेक्ष्य त्वया एकस्य गरीयस्त्वमुक्तं न केवलं, तस्मादवस्थापेक्षमेव गरीयानेकत्वं, बहवोऽपि बाधकाः स्युरवेक्षितव्या भवन्तीति ॥ ८६ ॥

व्याधिरेवेति केचित् , तत्प्रतीघातार्थत्वाच्चिकित्सायाः ॥ ८७ ॥

केचित् पुनराचार्या एवं मन्यन्ते — सकलोऽयं प्रकृत्याद्यपेक्षो व्याधिर्व्याधिप्रतीघातार्थः । तस्माद् व्याधिरेव सर्वथावेक्षितव्य इति ॥ ८७ ॥

स एव न प्रतिहन्येत, अननुविधानादितरेषाम् ॥ ८८ ॥

इति । तस्योत्तरम् । स एवेत्यवधारणया यो हि भवतावश्यकरणीयचेष्टः, स एव व्याधिरित्यर्थः । न प्रतिहन्येत तत्प्रतीघात एव न स्यात् । इतरेषां प्रकृत्यादीनां कारणानामननुविधानादनवेक्षणात् ॥ ८८ ॥

किञ्चान्यदन्यः —

प्रादुर्भवेदन्यो वा ॥ ८९ ॥

अन्यो व्याधिः प्रादुर्भवेत् , प्रयोगानिवृत्तितया । आह हि —

"एवं कृच्छ्रतमान् व्याधीन् दृश्यन्ते व्याधिसङ्कराः ।
प्रयोगापरिशुद्धत्वात् तथाचान्योन्यसम्भवात् ॥
प्रयोगः शमयेद् व्याधिं योऽन्यमन्यमुदीरयेत् ।
नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥"

इति ॥ ८९ ॥

मूलानुबन्धयोर्मूलमित्येके ॥ ९० ॥

एके पुनरुभयोर्मूलानुबन्धयोर्व्याध्योर्मूलमवेक्षितव्यमिति मन्यन्ते ॥ ९० ॥

तत्र हेतुः —

तत्प्रतीघाते ह्यनुबन्धप्रतीघातः ॥ ९१ ॥

इति । तन्मूल एवासावनुबन्ध इत्यभिसन्धिः ।

"कथं नु शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ।"

इति । नायमेकान्तः इत्ययं पक्षः प्रतिषिद्ध्यते ॥ ९१ ॥

नायमेकान्तः, क्वचिच्चापहाय मूलमनुबन्ध एव चिकित्स्यः ॥ ९२ ॥

मूलमपहाय मूलनिरपेक्षमनुबन्ध एव चिकित्स्य इति । क्वचिद् बलवन्तमुपद्रवं वेत्युक्तत्वात् ॥ ९२ ॥

अग्निं केचिदन्यो बलं सात्म्यमेके ॥ ९३ ॥

अग्निं केचिदवेक्षणीयेषु प्रधानं मन्यन्ते,

"स हि सारश्चिकित्सायाः यदग्निपरिरक्षणम् ।"

इति वचनाद् । बलं प्रधानमित्येके । बलं हि श्रेष्ठमधिकरणानामिति । सात्म्यं प्रधानमिति केचित्,

"सात्मेव तु (त्म्यमेव) निषेवे(त) न भवेद् रसलोलुपः ।
विमृश्य षड्रसान् सर्वान् सात्म्यमेवावचारयेत् ॥"

इति ॥ ९३ ॥

एवं भिन्नेषु विपश्चिन्मतेषु स्थितपक्षं प्रदर्शयन्नाह —

न युक्तमवधारणमिदमेव प्रधानमिदं नेति, चिकित्सायां हि प्रधानमवस्थानुविधानम् ॥ ९४ ॥

इदमेवाधिकरणानां प्रधानमिदं न प्रधानमित्येकान्तग्रहणमयुक्तं चिकित्साविषये। कुतः। अवस्थाबहुत्वात्। कस्याञ्चिद् व्याध्यवस्थायामग्निरेव गरीयान् भवति। कस्याञ्चिद् बलमेवेत्येवं, तस्मादवस्थावेक्षणमवस्थानुविधानं गरीयः। तस्यां तस्यामवस्थायां तत्तदेवानुविधातव्यमित्युक्तं भवति ॥ ९४ ॥

अवेक्षणीयाविकारत्वात् प्रागेव चिकित्सायामवेक्षणीयमायुरिति प्रदर्शयन्नाह—

**आयुः पुनरादौ परीक्ष्यं सति हि तस्मिन् क्रियासाफल्यं भवति ॥ ९५ ॥**

आयुषः परीक्षा तस्य स्थितिः किं दीर्घाल्पेति। तस्मिन् परीक्षिते किं स्यादिति। तस्मिन्नायुषि सति क्रिया फलवती भवति। अन्यथा व्यर्थश्रमः कृतो भवत्ययशश्च ॥ ९५ ॥

तत् कथं परीक्षितव्यमिति —

**तच्छकुननिमित्तलक्षणदैवारिष्टेभ्यः ॥ ९६ ॥**

इति। शकुनान्निमित्ताद् दैवादरिष्टाच्च। हेत्वर्थे पञ्चमी। शकुनमिति मृगपशुपक्षिसरीसृपाणामाख्या, तेषां गतिभाषितचेष्टाप्रकाराः, केषाञ्चिद् दर्शनं च। शुभं चाशुभं चेति द्विविधम्। तत्र शुभेन दीर्घायुरिति ज्ञायते, अशुभेनाल्पायुरिति। निमित्तं पूर्णकुम्भादिदर्शनं, लक्षणं शरीरगतं शुभाशुभाभिव्यञ्जकं चिह्नं, दैवं ज्योतिर्ज्ञानं, ग्रहस्थितिर्जन्माष्टकवर्गयोः ॥ ९६ ॥

(अ)रिष्टं स्वयमेव वक्ष्यति —

**त्रिकत्रयद्वन्द्वदिक्कालविक्रिया पुनररिष्टम् ॥ ९७ ॥**

त्रिकाणां त्रयं त्रिकत्रयं, त्रीणि त्रिकत्रयाणि—गुणत्रिकं दोषत्रिकं मनोवाक्कायलक्षणं त्रिकमिति। एतेषां त्रयाणां विकृतिश्चारिष्टम्। तद्यथा—सात्त्विकस्य राजसिकभावप्राप्तिः, राजसिकस्य वा सात्त्विकत्वप्राप्तिः। एवं शेषम्। तथा वातिकस्य पैत्तिकत्वं पित्तप्रकृतेर्वातप्रकृतित्वमित्यादि। मनसो विक्रिया मातरं पितरं वाग्रतः स्थितं न जानातीत्यादि। वाग्विक्रिया अवाच्यवचनम्। विकृतिश्च कायक्रिया,

अनाहारस्यापि कायस्याकृशत्वं निष्कारणं ह्रासो वा । द्वन्द्वानि पुनः शीतोष्णसुरभ्यसुरभिमृदुकठिनत्वादि । तद्यथा —

"य उष्णं मन्यते शीतं शीतमुष्णं च मन्यते ।
मरिष्यमाणं तं विद्यात् प्राप्तद्वन्द्वविपर्ययम् ॥"

इति । दिग्विक्रिया—यः पूर्वां मन्यते पश्चिमामित्यादि । कालविक्रिया—

"यस्त्वहर्मन्यते रात्रिं रात्रिं वा मन्यते त्वहः ।"

इति ॥ ९७ ॥

## विद्यात स्वशास्त्रेभ्यः पूर्वाणि ॥ ९८ ॥

इति । अरिष्टशब्दात् पूर्वाणि शकुननिमित्तलक्षणदेवा(दि?नि)-स्वेभ्यः शास्त्रेभ्यो विद्यात् । एतद्वचनार्थमेतेषामरिष्टसंज्ञितानां पृथग्वचनम् । अन्यथा शकुननिमित्तादयश्चारिष्टान्तर्भूता हि शास्त्रेभ्यः । ॥ ९८ ॥

एवं परीक्षितव्यानि परीक्ष्य तत्र बलाबलचिन्तां चोक्त्वा द्रव्यादीनां षण्णां पदार्थानां तत्र शरीरभूतानामिदंप्रधानतेदानीं परीक्ष्यते —

## द्रव्यप्रभृतीनां तु प्रधानं द्रव्यमेके ब्रुवते ॥ ९९ ॥

इति । अत्र षष्ठी निर्धारणलक्षणा । तु शब्दोऽधिकार-निवृत्त्यर्थः ॥ ९९ ॥

द्रव्यं प्रधानमिति प्रतिज्ञा रसादिभ्य इति कुतः —

## तरतमयोगानुपलब्धेः ॥ १०० ॥

तरतमयोगो रसादिषु दृष्टः । तत्र द्वयोरतिशयेतरद् । बहुभ्योऽतिशये तमप् । मधुरतरो मधुरतमः, शीततरः शीततमः, छर्दनीयतरं छर्दनीयतमम्, लघुतरो लघुतमः, कर्मतरं कर्मतममिति । द्रव्येषु नास्ति — यष्टीमधुकतरो यष्टीमधुकतम इति । तस्मात् तरतम-योगाभावाद् रसादिभ्यो द्रव्यं प्रधानमिति । अयं हेतुः कथं द्रव्यस्य प्राधान्यं साधयति । तरतमयोगवियुक्ता भावाः प्रधाना इति न लोके न शास्त्रे । तरतमपौ हि स्वजातीयानतिक्रमेण तद्विशेषं गमयतः । यथा नीलतरो नीलतम इति रक्तादिभ्यो विशेषयति । तस्मादन्यत्र वर्तमानस्य प्राधान्यं कथं साधयति । यदि तरतमयोगस्यादर्शनमात्रेण प्राधान्यं स्यात् । कतमस्मादप्राधान्यं च न स्यात् । अप्रधानेष्वपि वस्तुषु तरतमयोगाभावो विद्यत एवेति । तस्मादत्र प्रयुज्यमानानां हेतूनां

सर्वेषां दृष्टान्तदार्ष्टान्तिकयोगो न घटते, हेतूनामसामर्थ्यात्। कश्चित् यदृच्छया सम्भवति। एतेषां हेतूनां समासतस्त्रयमत्रार्थः। एते खलु विशेषास्तरतमयोगानुपलब्धिसर्वेन्द्रियोपलब्धिव्यवस्थानाधिष्ठानाश्रयोपकल्पप्रतीघातशास्त्रोपदेशसामर्थ्यविपर्यभिद्रव्यनुविधानाख्या द्रव्यस्यैव भवन्ति, न रसादीनामिति। एतेषु विषयेषु द्रव्यं प्रधानं रसादिरन्य इति। इममेवार्थमङ्गीकृत्य स्थितपक्षोऽप्ययमिति। यथाविषयं हि प्राधान्यं सर्वेषामिति नियतविषयं प्रति प्राधान्यम्। साधना(नां) चैतेषां दृष्टान्ताभावः चिकित्साविषयप्राधान्यं साध्यत इति। एवं रसादिष्वपि हेत्वर्थः सामान्यतो द्रष्टव्यः ॥ १०० ॥

द्रव्यप्राधान्यसाधनार्थमयं च हेतुः —

सर्वेन्द्रियोपलब्धेः ॥ १०१ ॥

इति। श्रोत्रादिभिरिन्द्रियैर्द्रव्यं गृह्यते। रसादयो ह्येकेन्द्रियग्राह्याः। रसनेन रसः शीतादि स्पर्शनेन वीर्यं फलदर्शनाच्चक्षुषेति कल्पयामः। विपाकस्तथैव कर्म चक्षुषा द्रव्यं पुनश्चक्षुषा दृष्ट्वा यष्टीमधुकं जानाति। स्पृष्ट्वा च रात्रौ यष्टीमधुकमिति प्रतिपद्यते। रसनेनास्वाद्य यष्टीमधुकमिति वेत्ति। घ्रात्वा च यष्टीमधुकमित्यवगच्छति। श्रुतं च यष्टीमधुकज्ञानं भवति। एवमनेकेन्द्रियग्राह्यत्वात् प्रधानं द्रव्यमिति। किमनेकेन्द्रियग्राह्यत्वं रूपादीनां न विद्यते, गुणसामान्यात् तेषाम्। तस्मात् प्राधान्यं न भवतीति नायं हेतुप्रयोगः। केवलं तस्य विशेषणमात्रं तेभ्यः प्रदर्शितं भवतीति। सर्वेन्द्रियग्राह्यत्वं च कस्य द्रव्यस्य। सिद्धवैशेषिकाः खलु मन्यन्ते—दार्शनं स्पार्शनं द्रव्यमिति। तत्रापि रात्रौ स्पृष्ट्वा स एवायं घट इत्यनुमिनोतीति। नेच्छन्त्येके। तस्मात् तेन तेनेन्द्रियेणोपलब्धेन द्रव्यविशेषणेन विशेष्यमुपलभ्यते इत्यनेकेन्द्रियग्राह्यत्वम् ॥ १०१ ॥

किञ्चान्यत् —

व्यवस्थानात् ॥ १०२ ॥

द्रव्यं व्यवस्थितं गुणा ह्यनवस्थिताः। उक्तं च —

"दूर्वाङ्कुरनिभं भूत्वा फलं जम्ब्वास्ततः पुनः।
मेचकं भजते वर्णं पुनरञ्जनसन्निभम् ॥"

इति।

एवं तद्गताश्च स्पर्शरूपगन्धाश्चानवस्थिताः । जम्बूफलमिति द्रव्यसामान्यम् । अत्र व्यवस्थितस्वभावत्वादार्यः प्रधानो दृष्टः । अव्यवस्थितत्वादप्रधानोऽनार्य इति यत्किञ्चिद् वक्तुं शक्यत इति ॥ १०२ ॥

किञ्चान्याः —

अधिष्ठानादाश्रयात् ॥ १०३ ॥

इति द्रव्यमाश्रयः आश्रयिणो रसादय इति । आश्रयभूतः प्रधानः स्वामी दृष्ट इति ॥ १०३ ॥

किञ्चान्यत् —

आरम्भसामर्थ्यात् ॥ १०४ ॥

आरंभश्चिकित्सायां क्रियारंभः मूलमाहरेत्यादि तस्मिन् द्रव्यस्यैव सामर्थ्यं न रसादीनामारंभसामर्थ्यम् । अविकलेन्द्रियः पुरुषः प्रधानो दृष्टः पङ्गोरिति ॥ १०४ ॥

किञ्चान्यत् —

विकल्पसामर्थ्यात् ॥ १०५ ॥

विविधः कल्पो विकल्पः कल्ककषायादिभावेन, तस्मिन् विकल्पे सामर्थ्यात्, तत्सर्वं द्रव्यस्यैव नान्यस्येति । यो हि विविधकल्पसमर्थः स प्रधानो दृष्टः । तद्यथा—ऋद्धी प्राप्तो मुनिः ॥ १०५ ॥

किञ्चान्यत् —

प्रतीघातसामर्थ्यात् ॥ १०६ ॥

प्रतीघात आवरणं, तस्मिन् सामर्थ्यं द्रव्यस्यैव भवति, मूर्त्तिमत्त्वाद् । अप्रतीघातात्मनां कालदिगात्मादीनां किं प्राधान्यं निवार्यत इति न सर्वेभ्यः प्राधान्यं साधयितुमिष्टं रसादिभ्य इत्यदोषः । तेषामपि मूर्त्तिमत्त्वमिष्यत एव केश्चिदिति । तदप्यसत् । तस्मादयमन्यः कल्पः— प्रतीघातसामर्थ्यात् । स्वस्थानेऽन्यस्यावकाशदानादिति । रसादयः संपृक्तास्तिष्ठन्तीति । आवरणार्थोऽपि स एव घटते । यः स्वस्मिन् स्थानेऽन्यस्यावकाशं निरुणद्धि, स प्रधानो दृष्टः चक्रवर्तीति ॥ १०६ ॥

किञ्चान्यत् —

शास्त्रोपदेशसामर्थ्यात् ॥ १०७ ॥

आगमादित्यर्थः । शास्त्र एवोपदिश्यते हि —

"य एव हि गुणा द्रव्ये शरीरेष्वपि ते स्मृताः ।
तान् द्रव्यैस्तद्गुणैरेव प्रयोगेष्वभिवर्धयेत् ॥"

इति । सामान्यप्रयोगवचने विशिष्टेन प्रयोगो निर्दिश्यत इति ॥ १०७ ॥

किञ्चान्यत् —

अवयवेन सिद्धेः ॥ १०८ ॥

अवयवेन एकदेशेन प्रदेशेन सिद्धेः, प्रयोगेष्विति वाक्यशेषः । यथा मूलत्वगादिना यः अवयवेन साधयति, स प्रधानो दृष्टः । तद्यथा— विजिगीषुः सामन्तादिनेति ॥ १०८ ॥

किञ्चान्यत् —

तदनुविधानाच्चेतरेषाम् ॥ १०९ ॥

इतरेषां रसादीनां द्रव्यस्यानुविधानाद्, द्रव्यमनुवर्तन्ते हि रसादयः, तारुण्ये तरुणाः संपत्तौ संपन्ना विपत्तौ विपन्ना भवन्तीति । ये यमनुवर्तन्ते, ते तस्मादप्रधाना दृष्टाः । तद्यथा—गुरोः शिष्या इति ॥ १०९ ॥

इदानीं —

रसाः प्रधाना इति केचित् ॥ ११० ॥

यथा—

रसानधिकारात् ॥ १११ ॥

केचिद् रसान् प्रधानान् ब्रुवतेऽधिकारात् । ते ह्यधिकृताश्चिकित्सायामिति । कथं —

"षट्स्वेव युक्तं वमनं षट्सु युक्तं विरेचनम् ।
षट्सु चास्थापनं युक्तं षट्सु संशमनं हितम् ॥"

इत्यादि । यो यस्मिन्नधिकृतः स तस्मिन्नन्येभ्यः प्रधानो दृष्टः सेनायां सेनापतिः ॥ १११ ॥

किञ्चान्यत् —

तेनोपसंहारात् ॥ ११२ ॥

तेन रसेन उपसंहृत्य तन्मुखेन शेषस्य वचनम् । यथा— विदारिगन्धादीन् द्रव्यगुणानुक्त्वा यानि यान्येवं प्रकाराणि मधुरस्कन्धपरिसंख्येयानि भवन्तीति । एवमारग्वधादय इति । अस्यार्थमन्यथा





वर्णयन्ति केचित्—तेन रसेन रसधातोरुपसंहारादाहरणोस्मिन् सम्पन्नरसं द्रव्यमाहरन्ति। अन्यद् वर्जयन्तीति ॥ ११२ ॥

तद्व्यापत्तौ शेषव्यापत्तेः ॥ ११३ ॥

इति। अनेनास्यैकार्थतेति न युक्तं, तद्व्यापत्तौ रसव्यापत्तौ। रसव्यापत्तिनिमित्तं शेषाणां द्रव्यादीनां व्यापत्तिः। यथा क्षीरस्य रसे दुष्टे क्षीरं न गृह्यते, तद्विपाकादयश्च विपन्ना इति ॥ ११३ ॥

किञ्चान्यत् —

उपदेशात् । ११४ ॥

उपदेशः शास्त्रम्। सामान्येनोपदिशति हि मधुराम्ललवणा वातं जयन्ति श्लेष्माणं जनयन्तीति शास्त्रोपदेशः। तत्तु द्रव्यस्य रसस्य च तुल्यं कथं रसानां प्राधान्यं साधयतीति। नात्र साधकत्वमेवाभिप्रेतम्। किं तर्हि। स्वपक्षसाधकस्य व्यपदेशो नोभयत्र सिद्धिरसिद्धिर्वेति प्रसञ्जनार्थम्। कथमिति। यदि शास्त्रसामर्थ्याद् द्रव्यं प्रधानं रसाश्च प्रधानाः शास्त्रसामर्थ्यादेव, यदि रसाः शास्त्रोपदिष्टा अपि न प्रधानाः, द्रव्यमपि न प्रधानं, शास्त्रोपदिष्टत्वाद् इति ॥ ११४ ॥

किञ्चान्यत् —

अपदेशात ॥ ११५ ॥

अपदेशो नाम अन्येनान्योऽपदिश्यत उपमारूपेण। पुरुषसिंहः पुरुषव्याघ्र इति प्रधानेन। एवमिहापि अपदेशो दृष्टः—मधुरं गान्धर्वं मधुरा वाणी कटुकः फणीति। केचिदन्यथा वर्णयन्ति—अपदिश्यन्ते रसाः पश्चादिति। कथं, कस्यचिच्छ्लेष्मप्रकोपं दृष्ट्वा भवता मधुराम्ललवणा रसा उपयुक्ता इति ॥ ११५ ॥

अनुमानात् ॥११६ ॥

इति। अस्यायमर्थः। अनुमानादिति चेदं वाक्यमन्यथा वर्णयन्ति। ते रसाः असौम्यदोषवर्धनं दृष्ट्वासौम्यभूतजनिता इत्यनुमीयन्ते। आग्नेयस्य वर्धनं दृष्ट्वा आग्नेयभूतजनिता इति। अयमपि न घटते प्रकृतप्राधान्यसाधनात्। तस्मादनुमानादित्येवं स्यात्। रसमुखेन द्रव्याण्यपरिच्छिन्नस्वभावान्यपि आस्वाद्यरसतः परिच्छेद्यानि

"य एव हि गुणा द्रव्ये शरीरेष्वपि ते स्मृताः ।
तान् द्रव्यैस्तद्गुणैरेव प्रयोगेष्वभिवर्धयेत् ॥"

इति । सामान्यप्रयोगवचने विशिष्टेन प्रयोगो निर्दिश्यत इति ॥ १०७ ॥

किञ्चान्यत् —

अवयवेन सिद्धेः ॥ १०८ ॥

अवयवेन एकदेशेन प्रदेशेन सिद्धेः, प्रयोगेष्विति वाक्यशेषः । यथा मूलत्वगादिना यः अवयवेन साधयति, स प्रधानो दृष्टः । तद्यथा— विजिगीषुः सामन्तादिनेति ॥ १०८ ॥

किञ्चान्यत् —

तदनुविधानाच्चेतरेषाम् ॥ १०९ ॥

इतरेषां रसादीनां द्रव्यस्यानुविधानाद्, द्रव्यमनुवर्तन्ते हि रसादयः, तारुण्ये तरुणाः संपत्तौ संपन्ना विपत्तौ विपन्ना भवन्तीति । ये यमनुवर्तन्ते, ते तस्मादप्रधाना दृष्टाः । तद्यथा—गुरोः शिष्या इति ॥ १०९ ॥

इदानीं —

रसाः प्रधाना इति केचित् ॥ ११० ॥

यथा—

रसानधिकारात् ॥ १११ ॥

केचिद् रसान् प्रधानान् ब्रुवतेऽधिकारात् । ते ह्यधिकृताश्चिकित्सायामिति । कथं —

"षट्स्वेव युक्तं वमनं षट्सु युक्तं विरेचनम् ।
षट्सु चास्थापनं युक्तं षट्सु संशमनं हितम् ॥"

इत्यादि । यो यस्मिन्नधिकृतः स तस्मिन्नन्येभ्यः प्रधानो दृष्टः सेनायां सेनापतिः ॥ १११ ॥

किञ्चान्यत् —

तेनोपसंहारात् ॥ ११२ ॥

तेन रसेन उपसंहृत्य तन्मुखेन शेषस्य वचनम् । यथा — विदारिगन्धादीन् द्रव्यगुणानुक्त्वा यानि यान्येवं प्रकाराणि मधुरस्कन्धपरिसंख्येयानि भवन्तीति । एवमाम्लस्कन्धादय इति । अन्यार्थमन्यथा

वर्णयन्ति केचित् — तेन रसेन रसधातोरुपसंहारादाहरणादानात् सम्पन्नरसं द्रव्यमाहरन्ति । अन्यद् वर्जयन्तीति ॥ ११२ ॥

तद्व्यापत्तौ शेषव्यापत्तेः ॥ ११३ ॥

इति । अनेनास्यैकार्थतेति न युक्तं, तद्व्यापत्तौ रसव्यापत्तौ । रसव्यापत्तिनिमित्तं शेषाणां द्रव्यादीनां व्यापत्तिः । यथा क्षीरस्य रसे दुष्टे क्षीरं न गृह्यते, तद्विपाकादयश्च विपन्ना इति ॥ ११३ ॥

किञ्चान्यत् —

उपदेशात् । ११४ ॥

उपदेशः शास्त्रम् । सामान्येनोपदिशति हि मधुराम्ललवणा वातं जयन्ति श्लेष्माणं जनयन्तीति शास्त्रोपदेशः । तत्तु द्रव्यस्य रसस्य च तुल्यं कथं रसानां प्राधान्यं साधयतीति । नात्र साधकत्वमेवाभिप्रेतम् । किं तर्हि । स्वपक्षसाधकस्य व्यपदेशो नोभयत्र सिद्धिरसिद्धिर्वेति प्रसञ्जनार्थम् । कथमिति । यदि शास्त्रसामर्थ्याद् द्रव्यं प्रधानं रसाश्च प्रधानाः शास्त्रसामर्थ्यादेव, यदि रसाः शास्त्रोपदिष्टा अपि न प्रधानाः, द्रव्यमपि न प्रधानं, शास्त्रोपदिष्टत्वाद् इति ॥ ११४ ॥

किञ्चान्यत् —

अपदेशात ॥ ११५ ॥

अपदेशो नाम अन्येनान्योऽपदिश्यत उपमारूपेण । पुरुषसिंहः पुरुषव्याघ्र इति प्रधानेन । एवमिहापि अपदेशो दृष्टः—मधुरं गान्धर्वं मधुरा वाणी कटुकः फणीति । केचिदन्यथा वर्णयन्ति— अपदिश्यन्ते रसाः पश्चादिति । कथं, कस्यचिच्छ्लेष्मप्रकोपं दृष्ट्वा भवता मधुराम्ललवणा रसा उपयुक्ता इति ॥ ११५ ॥

अनुमानात् ॥११६ ॥

इति । अस्यायमर्थः । अनुमानादिति चेदं वाक्यमन्यथा वर्णयन्ति । ते रसाः असौम्यदोषवर्धनं दृष्ट्वासौम्यभूतजनिता इत्यनुपीयन्ते । आग्नेयस्य वर्धनं दृष्ट्वा आग्नेयभूतजनिता इति । अयमपि न घटते प्रकृतप्राधान्यसाधनात् । तस्मादनुमानादित्येवं स्यात् । रसमुखेन द्रव्याण्यपरिच्छिन्नस्वभावान्यपि आस्वाद्यरसतः परिच्छेद्यानि

भवन्ति । तस्माद् द्रव्याद् रसा प्रधाना आस्वाद्यभूतगुणैरित्युक्तत्वात् । ॥ ११६ ॥

किञ्चान्यत् —

नानाविषयत्वात् ॥ ११७ ॥

अनेकाधारत्वादिति । मधुरस्य तावदिक्षुक्षीरशर्कराखण्डादयः । एवमन्येषां च । यद् बहुविषयं तत् प्रधानं दृष्टं, यथा मनः । अथवा चक्रवर्ती ॥ ११७ ॥ 4

किञ्चान्यत् —

तस्मिन् प्रदुष्टे सर्वधातुप्रदोषात् ॥ ११८ ॥

तस्मिन् रसे दुष्टे रक्तादयो धातवश्च दुष्टा भवन्ति । अत्र कथं जिह्वेन्द्रियग्राह्यो रसेऽधिकृतेऽभ्यन्तरो रसः प्रसाध्यत इति । रससामान्यं गृहीत्वोक्तमिति चेद्, नहि प्रसरणसामान्याद् गोधा सर्पो भवति । तस्मादयमन्यथास्य विन्यासः—तस्मिन् प्रदुष्ट इति । रसस्य प्रदुष्टिनिमित्तं जनपदव्याधिरिति । उक्तं च तदानीं स्थावरजङ्गमानामुद्ध्वंसते रस इति, रसस्य व्यापत्तिनिमित्ता व्याधय इति । सर्वधातुदोषा इति । सर्वेषां दोषाणां प्रदोषादित्यर्थः । अथवा दुष्टे रसे द्रव्य उपयुक्ते सर्वदोषप्रकोपादिति । ॥ ११८ ॥

किञ्चान्यत् —

तस्मिन् विशुद्धे सर्वधातुविशुद्धेः ॥ ११९ ॥

पूर्ववाक्येनैव गतार्थमेतद् वाक्यम् ॥ ११९ ॥ 4

किञ्च —

आगमाच्च ॥ १२० ॥

आगमः श्रुतिः । तत्र प्राज्यद्रव्यप्रतिनिधिवचने रसेनैव निर्देशः कृतः इति । यथा—आज्यार्थं यत्किञ्चिन्मधुरमाहर । चेति च शब्दः सर्वसमुच्चयार्थः ॥ १२० ॥

इदानीं गुणप्राधान्यपक्षः —

गुणाः प्रधाना इति केचित् ॥ १२१ ॥

गुणाद् रसानामभिभवात् ॥ १२२ ॥





गुणान् प्रधानान् मन्यन्ते रसेभ्य इति मन्यामहे, रसानामभिभवादिति वचनाद् । रसानभिभूय गुणाः स्वं कार्यं निर्वर्तयन्ति । यथा उष्णोदकं श्लेष्माणं हरति माधुर्यमभिभूय, तथा पटोलश्च महत्पञ्चमूलं तिक्तमौष्ण्याद् वातं जयति । यद् येनाभिभूयते, तत् तस्मादप्रधानं दृष्टम् । यथा भानोर्नक्षत्रमिति ॥ १२१, १२२ ॥

किञ्चान्यत् —



## विपाककारणत्वात् ॥ १२३ ॥

गुणाभिपाकयोः कारणं शीतस्निग्धगुरुपिच्छिलानि गुरुविपाकस्य, लघुरूक्षविशदतीक्ष्णानि लघुविपाकस्येति । कथमेवं, रसेभ्यः प्रधाना इति । (रसानां कार्यनिर्वृत्तिः पाकायत्ता । स च पाको गुणायत्त इति) यदपेक्षा यस्य वृत्तिस्तस्मात् तस्याः प्राधान्यं दृष्टम् । यथा वायोर्दोषधातुमलानाम् ॥ १२३ ॥

किञ्चान्यत् —

## बाहुल्यात् ॥ १२४ ॥

रसेभ्यो बहवो गुणा दृष्टाः रसाः षड् गुणा दशेति, अल्पेभ्यो बहवो विशिष्टा इति लोकप्रसिद्धमेककर्मणि ॥ १२४ ॥

किञ्च —

## बहुधोपयोगात् ॥ १२५ ॥



(बहुधाभ्यङ्गपरिषेकावगाहरूपेण शीतादय उपयुज्यन्ते, रसास्तु मुखत एव इति गुणाः प्रधानाः, ये बहुधोपयोगं गच्छन्ति ते प्रधाना दृष्टाः । यथा कल्पवृक्षाः ॥ १२५ ॥

किञ्चान्यत् —

## अनेककर्मत्वात् ॥ १२६ ॥

अनेकं कर्म धातुमलानां वर्धनक्षपणादि वर्णयन्ति । तत्र युक्तम्, अन्येषां च सामान्यादिति । तस्मादन्योऽर्थस्य विन्यासः — अनेकेषां कर्मानेककर्म, तद् येषां तेऽनेककर्माणः, तस्मादनेककर्मत्वाद् । रसादिसहितास्तेषां तेषां तत्तत्कर्मणि साहचर्यकरणादनेककर्माण इति ॥ १२६ ॥

किञ्चान्यत् —

महाविषयत्वात् ॥ १२७ ॥

पूर्ववद् रसेषु यथा ॥ १२७ ॥

किञ्चान्यत् —

गुणानुगृहीतानां रसानां प्राधान्यात् ॥ १२८ ॥

गुणैः शीतादिभिरनुगृहीता ये रसास्तेषां प्राधान्यदर्शनाद् रसेभ्यो गुणाः प्रधाना इति विद्मः। कथं —

"शैत्यात् स्नेहान्मार्दवाच्च पैच्छिल्याद्विभागतः।
मधुराणां घृतं श्रेष्ठं विपाके लाघवेन च ॥"

इति।

"अविदाहान्मृदुत्वाच्च कषायमधुरान्वयात्।
अम्लेष्वामलकं श्रेष्ठं विपाके लाघवेन च ॥
नात्युष्णत्वान्मृदुत्वाच्च स्नेहेनानुगमादपि।
लवणानां स्मृतं श्रेष्ठमविदाहाच्च सैन्धवम् ॥
मृदुत्वाच्च गुरुत्वाच्च वातपित्तप्रकोपनात्।
कटुकानां स्मृताः श्रेष्ठाः पिप्पल्यो गुणसम्पदा ॥
वृष्यत्वाच्च गुरुत्वाच्च मारुतस्याप्रकोपनात्।
तिक्तानां तु स्मृतं श्रेष्ठं पैच्छिल्येन च कुलकम् ॥
वृष्यत्वाद् बृंहणत्वाच्च हिक्कायां वातनिग्रहात्।
कषायाणां स्मृतं श्रेष्ठं विविधैश्च गुणैर्मधु ॥"

इति। ॥ १२८ ॥

किञ्चान्यत्, उपदेशादिभिस्त्रिभिः पूर्वोक्तैः —

उपदेशादपदेशादनुमानात् ॥ १२९ ॥

इति। तेषां गुरूष्णस्निग्धा वातघ्ना इत्यादिरुपदेशः। अपदेशस्तीक्ष्णोऽयं पुरुषो मृदुरयं शीत इति। अनुमानं पूर्ववत्। ॥ १२९ ॥

इदानीं —

वीर्यं प्रधानमित्येके ॥ १३० ॥

वीर्यप्राधान्याद् द्रव्याणाम् ॥ १३० ॥

( वीर्यं ? ) —

द्रव्याण्यपि वीर्यविशिष्टानि प्रधानानि भवन्ति यस्मात् ॥ १३१ ॥

तस्माद् वीर्यं प्रधानमित्येके, निर्वीर्याणि परित्यजन्तीति । ॥ १३१ ॥

किञ्चान्यत् —

तेन कर्मकरणात् ॥ १३२ ॥

तेन वीर्येण कर्मेप्सितं फलं तस्य करणात् साधनात्, "सर्वा वीर्यकृता क्रिये"ति वचनात् ॥ १३२ ॥

किञ्च —

अचिन्त्यत्वात् ॥ १३३ ॥

अपरीक्ष्यत्वाच्च,नेन प्रकारेण भविष्यतीति, भूतसमुदयं गुणसमुदयं वाश्रित्य चिन्तयितुं न शक्यते इति । यथा अन्तर्धानादिष्वचिन्त्यत्वात् प्रधानो विष्णुः ॥ १३३ ॥

किञ्चान्यत् —

दैवप्रतीघातात् ॥ १३४ ॥

दैवं राक्षसपिशाचादि वीर्येण प्रतिहन्यते, न रसादिभिरिति रक्षोघ्नान्यौषधानि दृश्यन्त इति । उक्तं हि

"वर्जयन्ति यथारण्यं सम्हिहं मृगपक्षिणः ।
वर्जयन्ति ग्रहास्तद्वत् सौषधं सूतिकागृहम् ॥"

इति । ॥ १३४ ॥

किञ्चान्यत् —

विषप्रतीघातात् ॥ १३५ ॥

विषं हि स्थावरजङ्गमात्मकं सर्वं वीर्येण प्रतिहन्यते । "तेन कर्मकरणादि"त्यनेनैव सिद्धे ननु आन(?) तथापि सिद्धिदर्शनार्थमन्यपदार्थेभ्य इति न दोषः ॥ १३५ ॥

दर्शनाच्छ्रवणात् ॥ १३६ ॥

एवं च विषप्रतीघातादित्यर्थः । तत्सर्वं दुन्दुभिध्वनीये कल्पे द्रष्टव्यम् —

"तेन दुन्दुभिमालिम्पेत्पताकास्तोरणानि च ।"

इत्यादीति ॥ १३६ ॥

किञ्च —

तुल्यरसगुणेषु विशेषात् ॥ १३७ ॥

तुल्यरसेषु तुल्यगुणेषु विशेषो दृश्यते, तिक्तः शीतो मृदुर्लघुः पिचुमन्दः कुष्ठं जयति, तादृशः कटुवङ्गः सन्दधाति पक्वातीसारम्। एवं विशेषदर्शनाद् द्रव्यरसगुणविशिष्टमस्ति प्रधानभूतम्। तस्याधिष्ठानमात्रं खल्विमे द्रव्यादय इति जानीमः ॥ १३७ ॥

किन्तु —

संयोगात् तन्निवृत्तेः ॥ १३८ ॥

द्रव्यादीनां संयोगे सति तत्तद्द्रव्यादिशक्तिविपरीतं शक्त्यन्तरमुत्पद्यते। तस्मादेभ्यो विशिष्टमर्थनिर्वर्तकं वीर्यमस्तीति विज्ञायते। यथा मधुघृतयोस्तुल्यधृतयोः संयोगाज्जीवनबृंहणलेखनसन्धानादिकार्यं विपरीतफलं वीर्यं दृष्टमिति ॥ १३८ ॥

किञ्च —

दर्शनाच्चाद्भुतादीनां कर्मणाम् ॥ १३९ ॥

अद्भुतानि कर्माणि दृश्यन्ते वीर्यकृतानि। यथा — मायाकारा येनकेनौषधेन हस्तिनं पद्मं वा विसृजन्ति, भूमिमस्पृशन्तस्तिष्ठन्तीत्येवमादयः ॥ १३९ ॥

आगमाच्च ॥ १४० ॥

शास्त्रादायुर्वेदादिति। यथा —

"वीर्यतः कार्यसामर्थ्यं द्रव्याणां भिषजो विदुः।

इति ॥ १४० ॥

इदानीं —

विपाकस्य (वीर्यं ?) प्राधान्यं प्रत्येक ब्रुवते ॥ १४१ ॥

विपाकसाद्गुण्ये तीक्ष्णाग्नीनां न दोषकराधिकपाकाः ॥ १४१ ॥

तन्निमित्तत्वात् प्रशमनवर्धनयोः ॥ १४२ ॥

दोषाणां प्रशमनवर्धने तन्निमित्ते सम्यक् पक्वेनाहारेणौषधेन वा दोषाः प्रशमं यान्ति। असम्यक्पक्वेन वृद्धिं गच्छन्तीति। तस्मात् तयोरायुर्वेदसारभूतयोः साधनाद् विपाकः प्रधानम्। यद्वृद्धिप्रशमनहेतुः

तत्प्रधानं दृष्टम् । यथा — उत्पत्तिप्रलयकारणं त्रिगुणं प्रधानमिति ॥ १४२ ॥

किञ्च —

धातूपदेहात् ॥ १४३ ॥

धातूनामुपचय उपदेहः । पूर्वोक्तेनैव किमेतन्न सिद्धम् । तत्र व्याध्युत्पत्तिप्रशमनमभिप्रेतम् । अत्र प्रतिदिवसं स्वस्थस्य धातुवृद्धिरिति ॥ १४३ ॥

किञ्च —

विपाकापेक्षत्वादितरेषां प्रायशो विपाकसाद्‌गुण्ये च गुणवतामप्यदोषात् ॥ १४४ ॥

विपाकात् तीक्ष्णाग्नीनां न दोषकरमिति ॥ १४४ ॥

विपाकवैगुण्ये गुणवतामपि दोषात् ॥ १४५ ॥

पथ्याहारस्याप्यसत्पाके सति व्याधिकरत्वादिति ॥ १४५ ॥

किञ्च —

शास्त्रप्रामाण्यात् ॥ १४६ ॥

"जीर्णेऽश्नतः कुमारस्य त्रितयं त्रिषु वर्त्मसु ।
यथावद् वर्तते नित्यं हिताहितनिषेवणात् ॥"

इति । विपाकसाद्‌गुण्य इत्यादीनां त्रयाणां वाक्यानामप्ययमागमोऽर्थसाधनः ॥ १४६ ॥

किन्तु —

तदभावे चिकित्साभावात् ॥ १४७ ॥

तस्य विपाकस्याभावे मूलत एव चिकित्सा न स्यात् । अग्निना ह्यपक्वानामौषधानां कार्यकरणं नास्तीति ॥ १४७ ॥

किञ्चान्यत् —

आरोग्यप्रयोजनत्वादायुर्वेदस्य सम्यग्विपाके तदुपलब्धेः ॥ १४८ ॥

समस्तस्य तन्त्रस्य प्रयोजनभूतस्यारोग्यस्य साधनात् पाकः प्रधानम् । कथं, सम्यग् विपाके सति तच्चारोग्यं भवतीति ॥ १४८ ॥

किञ्च —

सर्वशरीरप्रदोषात तस्मिन् दुष्टे ॥ १४९ ॥

इति। विपूच्यलसकादिषु सर्वशरीरप्रदोषो दृष्टः। तत्र शरीरग्रहणेन शरीरावयवा दोषाः परिगृहीताः। सर्वदोषप्रकोपादिति योऽर्थः ॥ १४९ ॥

सर्वशरीरानुग्रहात् ॥ १५० ॥

इत्येतदप्यनेनैव गतार्थम् ॥ १५० ॥

कर्मपदार्थस्य प्राधान्यं विधास्यते ॥ १५१ ॥

कर्मेतरेषां सामर्थ्यव्यञ्जनाद् ॥ १५२ ॥

इतरेषां द्रव्यादीनां पदार्थानां सामर्थ्यं फलं तस्य व्यञ्जनात् प्रकाशनात्। कथं द्रव्यादीन्यप्रयुज्यमानान्यापणस्थानि वनस्थानि वा कर्म कुर्वन्ति। तत्प्रयोगः कर्मसंज्ञितः षष्ठः पदार्थः प्रधानः। यथा शरशरासनतूणीसामर्थ्यव्यञ्जनाद् धन्वी तेभ्यो विशिष्ट इति ॥ १५१, १५२ ॥

किञ्चान्यत् —

तदनुग्रहे फलवत्त्वादफलवत्त्वाच्चोपघाते ॥ १५३ ॥

(न?) तस्य कर्मणोऽनुग्रहः तदनुग्रहः तस्मिन् सति सम्पदित्यर्थः। फलवत्त्वादितरेषां द्रव्यादीनां कर्मणि विपन्ने तेषां चाफलवत्त्वादिति पूर्वोक्तस्यैवार्थ इति चेत्। एवं सर्वत्र तुल्यार्थहेतुप्रयोगः प्रयोगान्तरे प्रयुक्त इति विज्ञेयः। एकस्मिन् प्रयोगे द्वयोर्हेत्वोः प्रयोगाभावादिति ॥ १५३ ॥

किञ्चान्यत् —

अर्थनिर्वर्तकत्वात् ॥ १५४ ॥

अर्थः प्रयोजनं कर्माणि विना न भवतीति ॥ १५४ ॥

किञ्चान्यत् —

तदर्थमुपसंग्रहात् ॥ १५५ ॥

शेषाणां तत्राभियोगात् ॥ १५६ ॥

शास्त्रसामर्थ्यात् ॥ १५७ ॥

द्रव्यादिव्यतिरेकेण भावात् ॥ १५८ ॥

तस्य क्वचिदव्यतिरेकात् ॥ १५९ ॥

तेनेतरेषां नित्यं सिद्धिः ॥ १६० ॥

व्यापदां तत्रैव नियमात् ॥ १६१ ॥

तेनोपचाराद् इतरेषाम् ॥ १६२ ॥

तेन कर्मणा उपचारात् व्यवहाराद् वचनाद् वेति। इतरेषां द्रव्यादीनाम् । वामनीयं द्रव्यं, विरेचनीयो रस इत्यादि। एवमेते विशेषाः कर्मण्येवायत्ताः, प्रायशोऽन्ये पदार्था विषय इति कर्मणः प्राधान्यं साधितम् ॥ १६२ ॥

एवं षण्णां पदार्थानामिदम्प्रधानतायां सर्वेषामवस्थायां च प्रसक्तिन्या-(मा)तमव्यवस्थितपक्षप्रदर्शनार्थमाह —

न युक्तमवधारणमिदमेव प्रधानमिदं नेति, चिकित्सायां द्रव्यादिषु वस्तुषु ॥ १६३ ॥

इदमेव प्रधानं चिकित्सायामित्यवधारणं न युक्तम्, एकान्तभावाश्रयणमयुक्तमित्यर्थः ॥ १६३ ॥

किं तर्हि —

यथाविषयं हि प्राधान्यं सर्वेषाम् ॥ १६४ ॥

यथाविषयं सर्वेषां प्राधान्यं भवति। सर्वाण्यपि स्वे स्वे विषये प्रधानानि। कः पुनरसौ विषय इति। हेतुरूपेणोक्ताः सर्वेषामधिष्ठानारम्भादिषु द्रव्यं प्रधानमेवं शेषाश्च ॥ १६४ ॥

कुत इति। अत्राह —

अविनिर्भोगाच्चैषां परस्परेणानुग्रहाच्च ॥ १६५ ॥

अविनिर्भोगादिति। द्रव्यादीनि षडपि न पृथग्वर्तीनि। यत्र द्रव्यं तत्र शेषाश्च। यत्र कर्म तत्र द्रव्यादीनि च इति। परस्परानुग्रहकराश्चैते चिकित्सायाः। यथा (रा? रसे) प्रयुज्यमाने द्रव्यमाधारभावेनानुग्रहं करोति, गुणा रससाहचर्याद्, वीर्यं तस्य शक्तिप्रकाशनाद्, विपाकः परिणामयेत्। कर्म संयोगसाधकमिति। एवं षडपि पदार्था विवक्षिताः प्राधान्येन व्यवस्थिताश्च ॥ १६५ ॥

तेषां सङ्करपरिग्रहार्थमिदं लक्षणमुच्यते —

द्रव्यमाश्रयलक्षणं पञ्चानाम् ॥ १६६ ॥

रसादीनां पदार्थानां यदाश्रयभूतं तद् द्रव्यम् ॥ १६६ ॥

रसलक्षणमास्वादः ॥ १६७ ॥

जिह्वेन्द्रियग्राह्यत्वाद्। रसलक्षणमिदं षण्णां सामान्यलक्षणम्। यदि सामान्यलक्षणं, कथं प्रत्यक्षज्ञानस्य विषय इति। नात्रास्वाद्यस्य मधुरास्वाद्यस्य चेति। मनसो ह्ययं परिकल्पभेद इत्यदोषः ॥ १६७ ॥

विश्वलक्षणा गुणाः ॥ १६८ ॥

विश्वं विकीर्णं भिन्नं वाभिन्नं लक्षणं येषां ते विश्वलक्षणा गुणाः। इदमत्रोक्तं भवति—शेषाणां पञ्चानां पदार्थभेदानामेकलक्षणावरोधो विद्यते। यथा शब्दादीनामाश्रयत्वं सर्वद्रव्यभेदानां तुल्यमास्वाद्यग्राह्यावरोधश्च। रसभेदानां कर्मलक्षणावरोधत्वं तुल्यम्। विपाकयोश्च परिणामलक्षणावरोधस्तुल्यः। गुणानामेवमेकलक्षणावरोधनमस्ति। यथा शीतोष्णादयः स्पर्शनेन्द्रियस्य ग्राह्याः। तेष्वेव स्निग्धरूक्षौ चक्षुर्ग्राह्यत्वे स्पर्शनेन्द्रियग्राह्यत्वे वा सर्वेऽवरोधं न गच्छन्ति गुणाः। यस्मादेवमेकलक्षणावरोधं न गच्छन्ति, तस्मात्तदेवैतेषामतुल्यम्। विकीर्णलक्षणत्वमेव लक्षणमिति। चतुर्षु वाससु स्थितेषु त्रीणि चिह्नितान्येकमचिह्नितम्। तदेव तस्याचिह्नत्वं तेषु चिह्नं भवति, तद्वदिहापीति, लक्षणलक्षितेष्वलक्षणलक्षितत्वाल्लक्षणप्रसिद्धिरिति ॥ १६८ ॥

कर्मलक्षणं वीर्यम् ॥ १६९ ॥

मेधाजननादि। मेधां दृष्ट्वा ज्ञायते ऊर्ध्वभागिकत्वमपि तथेति।
॥ १६९ ॥

परिणामलक्षणो विपाकः ॥ १७० ॥

परिणामोऽर्थान्तरभावः, जीर्तिरित्यर्थः। (एवं विदाह्यानामपि पाकावयवत्वं युज्यते) ॥ १७० ॥

क्रियालक्षणं कर्म ॥ १७१ ॥

अत्र कर्मेति समुदायक्रिया। तस्या लक्षणरूपेण व्यवस्थाप्यमाना अवयवक्रिया। वमनमिति समुदायक्रिया। तस्याः स्नेहनस्वेदनाश्वासनदिवसतद्दिवसाहारविधानाद्यवयवक्रिया, तयाभिव्यज्यते सा

समुदायक्रियेति । तद्यथा--ओदनपाकः समुदायक्रिया । तस्या एवोदकाधिश्रयतण्डुलधावनदर्वीघट्टनपरिस्रावणपरिवर्तनादयः क्रियाविशेषाः अवयवभूतास्तमभिव्यञ्जयन्ति तण्डुलविक्लृत्तिरूपमिति । अथवा करणं क्रियाकारणलक्षणं कर्मेति फलप्रतिष्ठितमाकाशं स्वात्मना निर्लुठितः कुम्भ इति स्वात्मनि प्रतिष्ठितमित्याकाशस्यान्य आत्मा न विद्यते । तथाप्याधारभावेन पृथग् विवक्षितः कुम्भादन्यद् किञ्चिदात्माख्यं किं तत्र विद्यते । तथापि करुणरूपेणोक्तमिति ॥ १७१ ॥

इति भदन्तनागार्जुनीयस्य रसवैशेषिकस्य नारसिंहकृते भाष्ये
प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः ।

एवं द्रव्यादय उपदिष्टाः प्राधान्येन विभक्ता लक्षिताश्च इदानीं परीक्ष्यन्ते । तत्रादौ द्रव्यस्यास्तित्वमेव पूर्वपक्षं प्रदर्श्य साधयितुकाम आह —

**द्रव्यमन्यद् गुणेभ्यो नास्त्यग्रहणात् ॥ १ ॥**

इति । इह तावत् केचिद् गुणसमुदायमात्रद्रव्यवादिनो यथा शब्दस्पर्शरूपरसगन्धेषु समस्तेषु द्रव्यसंज्ञा व्यस्तेषु गुणसंज्ञा सादृश्यमात्रे संज्ञेति । अपर एवमाह —

"द्रव्यकर्मगुणाधारस्त्वाधेयानां च कारणम् ।
द्रव्यमाहुरिदं केचित् क्रियां चोत्क्षेपणादिकाम् ॥"

इति । अन्ये त्वेवं वाञ्छन्ति —

"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥"

एवं भिन्नेष्वायुर्वेदसमयमभ्युपेत्य चिन्त्यते । आयुर्वेदे खलु गुणेभ्यः पृथग् द्रव्यं गुणानामाधारभूतमिति निर्णयः । उक्तं हि—

"य एव हि गुणा द्रव्ये शरीरेऽपि हि ते स्मृताः ।
तान् द्रव्यैस्तद्गुणैरेव प्रयोगेष्वभिवर्धयेत् ॥"

इति । तस्माद् गुणसमुदायद्रव्यवाद्येवमाह — गुणेभ्योऽन्यद् द्रव्यं नास्तीति । अनुपलब्धेरिति हेतुः । यदनुपलभ्यमानं, तन्नास्ति । यथा

शशविषाणादीनि। एवं सत्ययं हेतुरनैकान्तिकः। विद्यमानमपि मूलोदकाद्यनुपलभ्यमानमस्ति। अन्धकारणतिरोहितमत्यन्तमविद्यमानम्। अनीश्वरस्य द्वितीयं शिरस्तृतीयश्च भुजो नोपलभ्यते। तद्वदिहापि संशयः स्यात्। किं मूलोदकादिवद् विद्यमानं नोपलभ्यते, उताविद्यमानं शशविषाणवदिति। तस्मादेवं स्यात्— हेत्वर्थप्रमाणाभ्यामनुपलब्धेरिति। प्रत्यक्षेणानुमानेन वा नोपलभ्यते द्रव्यम्। आगमेनोपलभ्यत इति चेद्, न, अनुमानान्तर्भावात्। वैशेषिकास्तु मन्यन्ते दार्शनं स्पार्शनं च द्रव्यमिति प्रत्यक्षेणोपलभ्यत इति। तदनेनैवं प्रतिषिद्धं, षष्ठस्य द्रव्यग्राहकस्य करणस्याभावादिति। अतिदूरातिसामीप्यव्यवधानादिभिरपि विद्यमानं न गृह्यत इति हेतुरेवं वा विशेष्ये वक्तव्यम्, अनुपलब्धिकारणेष्वसत्स्वपि अनुपलब्धेरिति ॥ १ ॥

अयं चापरो हेतुः —

अविभागात् ॥ २ ॥

इति। पूर्वक एव पक्षः। यद् यस्मादन्यत् तत्तस्माद् विभक्तमुपलभ्यते। यथा कोशादसिः। न तथा गुणेभ्यो विभक्तं द्रव्यमुपलभ्यते। तस्मादविभागान्नास्ति गुणेभ्योऽन्यद् द्रव्यमित्येवं वैधर्म्येण सिद्धिः स्यात्। साधर्म्येण विना न केवलस्य वैधर्म्यस्य साधनत्वमिष्यते हि। तस्मात् साधर्म्येणायं प्रयोगः। न गुणसमुदायव्यतिरिक्तं द्रव्यमस्ति, गुणेभ्यो विभागाद्, यद् यस्माद् न विभज्यते तत्तस्मादन्यन्नास्ति, यथा सेनादि तदङ्गेभ्यः ॥ २ ॥

अयं चापरो हेतुर्दृष्टान्तसहित उच्यते —

गन्धवद्व्यतिरिक्तस्यानुपलब्धेः ॥ ३ ॥

इति। यथा हि गन्धः पुष्पादन्यः पुष्पं व्यतिरिच्यापि गृह्यते। व्यतिरेकवृत्तित्वं भिन्नदेशवृत्तित्वम्। अन्यस्मिन् देशे पुष्पमुपलभ्यते अन्यस्मिन् गन्ध इति व्यतिरेकवृत्तित्वम्। यदि द्रव्यमन्यद् गुणेभ्यः। व्यतिरिच्यान्यत्र गुणप्रदेशाद् गृह्यत एवं गन्धवद्व्यतिरिक्तस्य द्रव्यस्यानुपलब्धेर्नास्ति द्रव्यं गुणेभ्योऽन्यदित्ययं च वैधर्म्यप्रयोगः। वैधर्म्यप्रयोगे प्रदर्शिते तद्विपरीतः साधर्म्यप्रयोगः सुकरस्तद्विदामिति नोक्तः। अथैवं स्याद् — नान्यद् द्रव्यं गुणेभ्यः, अव्यतिरेकवृत्तित्वात्, पिपीलि-

कापलक्त्विव(द्) विपीलिकाभ्य इति । पुनर्गन्धवत्त्वादिति योज्यं वैध-र्म्येण ॥ ३ ॥

अयं चापरो हेतुः —

षष्ठस्य चेन्द्रियस्य द्रव्यग्राहकस्याभावात् ॥ ४ ॥

इति । अभावाच्चेति हेतूनां समुच्चयार्थश्चशब्दः । श्रोत्रादि-व्यतिरिक्तस्य षष्ठग्राहकस्येन्द्रियस्याभावाद् नास्ति द्रव्यं गुणेभ्यः इति । अयं पुनर्हेतुरत्र न घटते, ग्राहकाभावाद् ग्राह्याभाव इति । कुत एतद्, दृष्टान्ताभावश्चात्र भवति । षष्ठेनेन्द्रियेण मनसा गृह्यत इति चेन्न, पूर्वमेव प्रत्यक्षानुमानाभ्यामनुपलब्धेरिति निषिद्धत्वाद्, मनसश्चेन्द्रियत्वं च विवादस्थानमिति । तस्मादत्रैवं शोभेत, शब्दादिव्यतिरिक्तं द्रव्यम-स्तीति प्रतिपन्नं भवता । शब्दादयश्चात्र श्रोत्रादिभिर्गृह्यमाणा दृश्यन्ते । तेषां पुञ्जत्वादन्यस्य ग्राहकं किं श्रोत्रादिष्वन्यतमदाहोस्विदन्यद् । यदि तेष्वेवेन्द्रियेष्वन्यतमेन गृह्येत गुणत्वप्रसङ्गः । यद्यन्यदिन्द्रियान्तरं षष्ठं स्यात्, तद् वक्तव्यम् । यदि तन्न ब्रवीति भवान्, तस्मात् तदभावात्त एव रूपादयो द्रव्यसंज्ञां लभन्ते, नान्यत् तद्व्यतिरिक्तमिति प्रज्ञातविव-रणद्वारेणोत्तरमुक्तमिति पूर्वं साधने च साधितत्वात् ॥ ४ ॥

एवं पृथग् द्रव्याभावे साधिते परस्त्वाह —

संख्याभेदाद् द्रव्यमन्यद् गुणेभ्यः ॥ ५ ॥

इति । संख्याभेदो हि नाम संख्येयानां भेदेन सिध्यति । यथा—एको घटश्चत्वारो घटा इति । एकसंख्याविषयो ह्येक एव घटोऽन्यश्चतुःसंख्याविषयाश्चान्ये चत्वार इति । एवमत्रापि संख्या-भेदस्यार्थभेदकस्य दर्शनादेका पिप्पली, तस्याः पञ्च रूपादयो गुणा इति, जानीमोऽन्यद् द्रव्यं गुणेभ्य इति । अत्र प्रयोगः—द्रव्यमन्यद् गुणेभ्यः, संख्याभेदाद्, यत्र संख्याभेदः तत्रान्यत्वं दृष्टं, यथा एको द्वाविति । एवमनेनानुमानेनोपलभ्य इत्यनुपलब्धेरित्ययं हेतुरस्मान् प्रत्यसिद्ध इत्युक्तं भवति ॥ ५ ॥

संख्याभेदादित्यस्य हेतोर्व्यभिचारं दर्शयन्नाह —

संख्याभेदः समुदायापेक्षः ॥ ६ ॥

इति । अनर्थान्तरत्वेऽपि संख्याभेदो दृष्टो हि समुदायमपेक्ष्य ।

यथा हस्त्यश्वरथपदातयश्चत्वार्यङ्गानि एका सेनेति। वनवच्च, धवखदिरपलाशन्यग्रोधा वनमिति। एवमत्रापि शब्दादयः पञ्च तेषां समुदायलक्षणैका पिण्डलीति स्यादिति ॥ ६ ॥

हेतोर्व्यभिचारपरिहरणार्थं विशेषान्तरमाश्रयन्नाह —

न विनिर्भोगेणानुपलब्धेर्गुणानां सेनाङ्गवत् ॥ ७ ॥

इति। सेनाङ्गानि विनिर्भुज्योपलभ्यन्ते — इमे हस्तिनः इमे रथाः इमे अश्वाः इमाः पत्तयः। एवं गुणा न शक्या द्रव्याद् विनिर्भुज्य प्रदर्शयितुम्। तस्मादसमञ्जसोऽयं दृष्टान्त इति। अत्रैतदुक्तं भवति— अविनिर्भोगवृत्तित्वे सति संख्याभेदादिति हेतुर्विशेष्ये वक्तव्य इति। एवं विशेषिते विनिर्भोगवृत्ति सर्वं व्युदस्तं भवतीति व्यभिचारः परिहृतो भवतीति। एवं द्रव्यस्यान्यत्वं साधितमिति मन्यन्ते केचित् एवमप्यसिद्धमेव, दृष्टान्ताभावात् ॥ ७ ॥

अविनिर्भोगविशेषणपक्षे अनुपलब्धेरित्येनं हेतु परिहृतमित्यवमन्यमानो विभागादित्यस्यां हेतोर्नैकान्तिकत्वं प्रदर्शयन्नाह —

सत्यन्यत्वे च विभागो गुणानामिव परस्परेण ॥ ८ ॥

इति। शब्दादयो हि परस्परतो भिन्ना (अ)प्यनैकान्तिकग्राह्यत्वाद् भिन्नशक्तित्वाच्च विभज्यमाना नोपलभ्यन्ते एकस्मिन्नाधारे। तथापि तेषामन्यत्वं प्रसिद्धम्। इहापि गुणेभ्यो विभक्तुं न शक्यमपि द्रव्यं गुणेभ्योऽन्यद् भवत्विति। अयमपि दृष्टान्तो गुणसमुदायद्रव्यवादी। किं लक्षणकृतमन्यत्वं प्रदेशकृतं वाभिप्रेतं भवतेति विभज्य यदि पृच्छ्यते, तदानीमसाधुरेव स्यादिति ॥ ८ ॥

इदानीं गन्धवदित्यस्य वैधर्म्यदृष्टान्तस्यासिद्धतां दर्शयन्नाह —

गन्धवद्द्व्यतिरेकादव्यतिरिक्तो गन्धस्य ॥ ९ ॥

इति। गन्धस्य स्वाश्रयं व्यतिरिच्य वृत्तिरस्माभिर्नेष्यते। किन्तर्हि। गन्धव्यतिरेक इष्यते। गन्धवतो हि परमसूक्ष्माः पुष्पावयवाः पुष्पाद् व्यतिरिच्यन्ते। तदाश्रितो हि गन्ध उपलभ्यत इति। कथमिदमवसीयत इति। दूरस्थिते पुष्पे गन्धोऽन्यत्रोपलभ्यते। स गन्धो ह्युपलभ्यमानो द्विधा ह्युपलभ्येत — इन्द्रियं वा तत्र गत्वा गृह्णीयाद्, गन्धो वा इन्द्रियसन्निकर्षमागच्छेदिति। उभयं ह्यत्र न

युक्तम् । अचेतनत्वादिन्द्रियाणां गतिर्नास्ति । प्रेरकस्याभावाच्च गन्धस्यागमनं न युक्तं, गुणत्वाद् । गुणा ह्याश्रयपरित्यागं यदि कुर्वन्ति, तदा तेषां स्थितिर्विकारिता वा नास्तीति । तस्मादनया गन्धस्योपलब्ध्या पुष्पावयवा वायुना प्रेर्यमाणाः सञ्चरन्तो घ्राणेन्द्रियसंयोगमुपगता इति पश्यामः ॥ ९ ॥

अनया युक्त्या पुष्पात् पुष्पावयवच्युतिं साधयन्नाह —

स्याच्च पुष्पमगन्धमनवयवत्वाद् गुणानामपगमे गन्धस्य ॥ १० ॥

इति । यदि केवलं गन्ध एव पुष्पादपयातः स्याद्, अवस्थितं पुष्पमगन्धं स्याद्, गन्धविरहितेन भवितव्यमिति । कुत इति । निर्गतत्वाद् गन्धस्येति । गन्धस्यैकदेशो गतो हि गन्धशेषः स्थित इति चेदित्याह — अनवयवत्वाद् गुणानां, तन्न शक्यमित्यर्थः । निरवयवा हि गुणाः ॥ १० ॥

गुणानां निरवयवत्वमस्माकं प्रसिद्धमित्युक्ते गुणानां निरवयवत्वप्रसाधनार्थमाह —

स्वकारणसमवायादवयविनः कारणगुणेषु चासमवायात् कार्यगुणानाम् ॥ ११ ॥

इति । स्वकारणेषु समवायात् स्वकारणसमवायात् । अवयविनः अवयवा अस्य सन्तीत्यवयवी तस्यावयविनः अवयवाः एकदेशाः प्रदेशा इति । तस्यावयविनः । कारणस्य गुणाः कारणगुणाः कारणद्रव्यगुणाः, तेषु गुणेषु (अ)समवायात् तदाधारभावेनावस्थानात् । कार्यगुणानां कार्यद्रव्यगुणानां, यथा द्रव्याणि द्रव्यान्तरमारभन्त इति । तन्तुद्रव्यैः संयुक्तैः पटद्रव्यमारभ्यते । स खल्ववयवी स्वकारणेष्वेव तन्तुषु समवेतो भवति, तन्त्वाधारो भवतीति । इह तन्तुषु पट इति तत्रैव गुणाश्च गुणान्तरमारभन्त इति तन्तुगुणैः शौक्ल्यगौरवादिभिर्गुणान्तराण्यारभ्यन्ते । तानि गुणान्तराणि पुनः स्वकारणभूतेषु तन्तुगुणेषु नावतिष्ठन्ते न समवयन्ति, पटद्रव्यनिर्गुणत्वाद्, गुणा न क्वापि तिष्ठन्तीति. अवयवद्रव्ये पटैकदेशे नावस्थानं कुर्वन्ति । यदि गुणोऽपि सावयवः स्यात्,

स्वकारणगुण एव समवायोऽप्यभविष्यत् । एवं नाभविष्यत् । तस्मादवयविधर्मव्यतिक्रमान्नैते गुणा ह्यवयववन्त इति जानीमः ॥ ११ ॥

## शब्दसामान्ययोरभेदाच्च ॥ १२ ॥

इति । अस्माद्धेतोरपि निरवयवा गुणा इति । कारणस्य च कार्यस्य च शब्दभेदः सामान्यभेदश्च दृष्टः । अवयविभिर्निरवयवस्य गुणस्य भेदो न दृष्ट इति । एवं चावयविधर्मताया गुणेष्वनुपलम्भाल्लक्ष्यते निरवयवा गुणा इति परिच्छेत्तुं, यथा तन्तुरिति कारणस्य शब्दः, पट इति तत्कार्यस्य, तन्तुत्वं सामान्यं स्थूलसूक्ष्मकार्पासिकक्षौमदुकूलपट्टतन्तुविशेषपक्षत्वात् । पटत्वं सामान्यं नीलपीतरक्तादिविशेषाद् एवं भेदो नास्ति तन्तुशौक्ल्यं पटशौक्ल्यमिति । तदेवोभयत्रेति सामान्यभेदश्च नास्ति. उभयत्र शुक्लत्वमेवेति विशेषाभावात् । कुन्देन्दुशङ्खकुमुदादिपक्षभेदापेक्षया सामान्यमिति चेत्, नैते गुणभेदा हि । द्रव्यभेदा हि । इयं वैशेषिकाणामेव स्वगृहविलम्बनेति गुणसमुदायद्रव्यवादिनं न प्रमोदयति । प्रसङ्गागतं प्रसाध्येदानीं प्रकृतमेवानुगच्छन्तीति ॥ १२ ॥

## सूक्ष्मत्वादवयवस्याग्रहणं पुष्पे ॥ १३ ॥

इति । यदि पुष्पात् पुष्पावयवो व्यपेतः, पुष्पस्य खण्डता कस्मान्न गृह्यत इति । पुष्पावयवसमेतो गन्धो यद्युपलब्धः, तस्य रूपमुपलभ्येत, तदाधारत्वाद् गन्धवत् । तद्गन्धो न गृह्येत, पुष्पादपक्रान्तावयवसंश्रितत्वात्, तदाश्रितरूपवदिति ॥ १३ ॥

एवं पूर्वपाक्षिकेण प्रक्रान्तः सन्नाह —

## रूपस्याग्रहणमनुद्भूतत्वाल्लवणपिण्डस्येवाम्भसि ॥ १४ ॥

इति । पुष्पादपग(त)स्यावयवस्य रूपं न गृह्यते, अनुद्भूतत्वाद् अपटीयस्त्वाद् । यः पटीयान् स एव गृह्यते । यथा लवणपिण्डस्याम्भसि प्रविलायितस्य रसो गृह्यते पटीयान्, न रूपं, तद्वदिहापीति । अत्र तावल्लवणपिण्डस्य रूपं प्रति ली(ना ? नं) द्रवतासमन्वितेनाम्भसो रूपेणाभिभूतत्वान्नग्रहणमुपैति । अत्र कथं भिन्नजातीयेन गन्धेन रूपस्याभिभव इति । नात्राभिभवोऽभिप्रेतः । किं तर्हि उद्भूतिनिमि

भूतानां स्वात्मलाभपरिपूर्णता। अपरिपूर्णतमला(भ ? भं हि) तदानीं तद्रूपमिति। ॥ १४ ॥

एवं गन्धवदित्ययं दृष्टान्तोऽसिद्धत्वेन साधितः। इदानीं षष्ठस्य करण-स्याभावादित्यस्योत्तरमिदं—

संख्यासामान्यकर्मवद् ग्रहणं स्याद् असति षष्ठे ॥ १५ ॥

इति। एकद्वित्र्यादयः संख्या। सामान्यं जातिः। गोत्वाद्यनु-प्रवृत्तिबुद्धिजनकं सामान्यमिति गुण्डखण्डादिष्वनुप्रवृत्तिबुद्धिं गोत्वरूपेण दर्शयति। कर्मोत्क्षेपणादि पञ्चविधम्। उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणीति ॥ १५ ॥

एते संख्यादयः षष्ठस्येन्द्रियस्य तद्ग्राहकस्याभावेऽपि गृह्यन्ते। तद्वद् द्रव्यमपि गुणग्राहकैरेवेन्द्रियैर्गृह्यतामित्यत्राह —

द्रव्यप्रतिज्ञस्य स्वतन्त्रं द्रव्यम् ॥ १६ ॥

इति। इह द्रव्यप्रतिज्ञो नाम गुणव्यतिरिक्तद्रव्यवादी, तस्य। स्वतन्त्रमन्यनिरपेक्षं द्रव्यं स्यादिति। अयमत्राभिप्रायः — संख्यादीनि गृह्यमाणानि न स्वातन्त्र्येण गृह्यन्ते। रूपिद्रव्ये समवेतानि तेन संगृह्यन्ते। यथा संख्या संख्येयेन सचक्षुषा गृह्यते, सामान्यं स्वभेदेन, कर्म चात्मनः आधारेण। तथैवोक्तं हि — "संख्याप्रमाणानि संयोग-विभागेन परत्वापरत्वे कर्म रूपिसमवायाच्चाक्षुषाणी"ति। तस्माच्छब्दा-दिवत् स्वतन्त्रेणैव गृह्यन्ते। ॥ १६ ॥

आचार्यस्त्वाह —

गुणप्रतिज्ञस्यापि स्वतन्त्रा गुणाः ॥ १७ ॥

इति। गुणप्रतिज्ञो नाम गुणसमुदायद्रव्यवादी। तस्यापि गुणानां स्वातन्त्र्यमवश्यमभ्युपगन्तव्यं भवति। तदानीं गुणसंज्ञितानां शब्दादीनामन्यनिरपेक्षं ग्रहणं प्राप्नोति। यदि तस्य नेष्यते अत्रापि नेष्यतामित्यभिप्रायः ॥ १७ ॥

एवं पूर्वपक्षः समीकृतः। इदानीं स्वपक्षसाधनार्थमेते हेतव उपदि-श्यन्ते —

अन्यदेव व्यपदेशा॥ ॥ १८ ॥

इति । अन्यद् द्रव्यं गुणेभ्यः, व्यपदेशात । व्यपदेशो नाम षष्ठ्या व्यपदेशः । अन्येनान्यस्य व्यपदेश इति । स्वात्मना स्वात्मनो व्यपदेशो नास्तीत्यभिसन्धिः । देवदत्तस्य गावः यज्ञदत्तस्य गृहमिति । देवदत्तश्चान्यो गावश्चान्या इति । अत्राप्यस्त्ययं व्यपदेशः — यष्टिमधुकस्य रसः, उत्पलस्य गन्ध इति । यष्टिमधुकोऽपि रसादन्यः, गन्धादुत्पलं चान्यद् इति । एते हेतवो वैशेषिकमतानुसारेणाचार्येणोक्ता इति यथा श्रुतमेव व्याक्रियन्ते, न विशेषार्थगत्या ॥ १८ ॥

सामान्यभेदात ॥ १९ ॥

अन्यद् द्रव्यमिति सामान्यभेदोऽत्र दृश्यते । द्रव्यत्वं गुणत्वमिति यत्र सामान्यभेदस्तत्रान्यत्वं दृष्टं, यथा गोत्वमश्वत्वमित्यत्र ॥ १९ ॥

बुद्धिभेदाद् ॥ २० ॥

गुण इति गुणावलम्बिनी चान्या बुद्धिः, द्रव्यमिति द्रव्यावलम्बिनी च निर्निमित्ता बुद्धिर्नास्तीति । यत्र बुद्धिभेदस्तत्रार्थभेदो दृष्टः । यथा-शब्दरसयोः ॥ २० ॥

अन्यत्वेऽभिज्ञानाद् गुणानाम् ॥ २१ ॥

गुणानामन्यत्वेऽभिज्ञानात प्रत्यभिज्ञानात् — तदेवेदं वस्त्विति । यथा कश्चिद् घटार्थी कुलालमभिगम्याह — अस्मदभिप्रायानुकूल्येन कश्चिद् घटो निवर्त्यतामिति । स च तेन निर्वर्तितो घटस्तेन तस्मिंस्तदानीमिमे हि गुणा घटे उपलब्धाः — श्यामो वर्णः, अपटुः शब्दः, गन्धश्चान्यादृशः रसश्च, स्पर्शश्च मृदुः, एतानुपलभ्यासौ गतः । पुनर्घटे दग्धेऽधिगम्य अन्येषु गुणेषूपलभ्यमानेषु रक्तो वर्णः अनुनादी शब्दः सौगन्ध्यलाघवादिषु पूर्वेषु श्यामतादिषु नष्टेषु स एवायं घट इति जानाति । यदि गुणसमुदायमात्रं द्रव्यं स्यात्, पूर्वसमुदितेषु गुणेषु नष्टेषु अन्येषु समुदितेषु गुणेषु स एवायमिति बुद्धिः कथमुत्पद्यते । यद्युत्पद्येत स एवेति, अन्यगुणसमुदायत्वादिति । तस्माद् गुणव्यतिरिक्तं तदाश्रयभूतं घटाख्यं प्रत्यभिज्ञानविषयमस्तीति ॥ २१ ॥

शास्त्रसामर्थ्याच्च ॥ २२ ॥

चशब्दो हेतुसमुच्चयार्थः । शास्त्रमायुर्वेदः, तस्य सामर्थ्यं पृथग् गुणेभ्यः इति चोदना । कथं, य एव हि गुणा इत्यादि गुणसमुदायमात्रं द्रव्यं स्यात्, कथं समुदायः समुदायिभ्योऽन्यो विद्यमानः समुदायिनां गुणानामाश्रयीभवति । स्वात्मनि वृत्तिविरोधाद्, गुणा द्रव्ये इत्यनभिधानात्, कुण्डे बदराणीति तदाधाराधेयपृथक्त्वं सिद्धमिति ॥ २२ ॥

एवं साधितं द्रव्यम् । इदानीमुद्देशावसरप्राप्तस्य परीक्षां तृतीयेऽध्याये विस्तरतो वक्तुकाम आह —

गुणेभ्योऽन्ये रसाः, प्रयोजनार्थं तेषां पृथगभिधानम् ॥ २३ ॥

इति । शब्दादिके गुणपदार्थेऽवरुद्धो हि रसः । तथापि तस्य गुणेभ्यो रूपादिभ्यः पृथग्वचनं प्रयोजनार्थम् । तत् खलु प्रयोजनं तान्त्रिकस्य शीतादेर्गुणपदार्थस्य संग्रहः । ततो रसादनन्तरं गुणपदार्थो विचार्यते । गुणानामाधार एव तावद् विचार्यते । शास्त्रोपक्रमयथा व्यपदेशो दृश्यते । यथा कषाय इति ॥ २३ ॥

शीतादीनेके रसगुणानिति ब्रुवते ॥ २४ ॥

शीतादीन् शीतोष्णस्निग्धरूक्षादीन् । अनेनागमेन रसगुणानिति ब्रुवते । यथा —

"शीतोष्णं गुरु वैशद्यं तैक्ष्ण्यपैच्छिल्यगौरवम् ।
लाघवं मार्दवं स्नेहो रसानां तु गुणा दश ॥"

इति ॥ २४ ॥

अस्य प्रतिषेधार्थमाह —

न निर्गुणत्वाद् गुणानाम् ॥ २५ ॥

इति । न इति पूर्वोक्तस्य प्रतिषेधः । निर्गुणत्वाद् गुणानामिति । आह —

"केषाञ्चिद् द्रव्यविषयो हेतुर्योगविभागयोः ।
हेतुर्वा स तु सापेक्षो रूपादिर्निर्गुणो गुणः ॥"

इति । अथापि,

"स्वाश्रयाभिन्नशब्दस्तु विशेषणमुपाश्रितः ।
एवं प्रत्ययनिर्देश्यः पारतन्त्र्यादसौ गुणः ॥"

इति । गुणशब्दास्तावदस्वतन्त्रत्वात् पराश्रयवृत्तितामुपादाय प्रवृत्ताः । तस्मान्निर्गुणा गुणः । रसाश्च गुणा इति कथमुपलभ्यत इति । आगमात् । "शब्दस्पर्शरूपरसवत्य आपश्चतुर्गुणाः" इति ॥ २५ ॥

गुणानां गुणवत्त्वे किं स्यादित्याह —

**गुणानां गुणवत्त्वे ह्यनवस्थाप्रसङ्गो लक्षणवैषम्यं वा ॥ २६ ॥**

इत्येतद् भवति । अत्रानवस्था । रसस्तु गुणः शीतादिभिर्गुणवान् संवृत्तः । शीतादयो गुणत्वादन्यैर्गुणैर्गुणवन्तः स्युः । ते चान्यैरित्येवमनवस्था स्यात् । रसा एव शीतादिभिर्गुणवन्तः स्युः । शीतादयो गुणवन्तो न स्युरिति चेत् । किं कृतोऽयं नियमः गुणत्वे तुल्ये एकस्यैव गुणस्य गुणत्वं नेतरस्येति । अथापि शीतादिभिर्गुणत्वाद् रसैश्च निर्गुणैर्भवितव्यमिति स्यात् । लक्षणवैषम्यं पुनर्गुणानां द्रव्यलक्षणप्राप्तिः । यथा क्रियावद् गुणवत् समवायिकारणं द्रव्यमिति द्रव्यलक्षणम् । तत्र गुणवत्त्वे गुणानां द्रव्यलक्षणप्राप्तिः सज्जतेति । तस्माद् द्रव्याधार(र ? रा) एव गुणाः ॥ २६ ॥

कथमित्याह —

**शास्त्रप्रामाण्याल्लोकोपचारात् तत्र चोपलब्धेर्द्रव्याणाम् ॥ २७ ॥**

इति । शास्त्रप्रामाण्याच्च द्रव्याणां गुणाः, इक्षुः शीतो गुरुर्मधुर इति । लोकः शास्त्रबाह्यो जनः । स च प्राह शीतमुदकमुष्णोऽग्निरिति । तत्रेति द्रव्ये । उपलब्धेः । कुत एतत् । स्पर्शेन्द्रियेण शीतगुणद्रव्यसन्निकर्षे संयुक्तसमवायलक्षणेन सम्बन्धेन शीतादिरुपलभ्यते । इतश्च न रसगुणाः ॥ २७ ॥

**रसव्यतिरेकेण चोपलब्धेः ॥ २८ ॥**

इति । रसरहितयोरग्निवाय्वोरुष्णशीतलघुरूक्षादयो गृह्यन्त इति न रसगुणाः । यो यस्य गुणः, स तस्मिन्नेवोपलभ्यते । यथा — अग्नावौष्ण्यमिति । कथं तर्हि शीतास्वप्सु चौष्ण्यमुपलभ्यत इति । तत्राप्यग्निपरः, परमाणूनां प्रवेशाभ्युपगमात् । अन्यथा तासामपामग्निसंबन्धादूर्ध्वगतिः कथं सिद्ध्यति ॥ २८ ॥

परमगुर्व्य इति शास्त्रेषु श्रूयमाणानां रसगुणानां कथं सम्भव इत्याह —

ब्रूवते—रसगुणमात्रं न रसगुणाभिधानमन्यद् वीर्यमिति। एवं मात्र-शब्दश्च सार्थकः स्यात्। रसगुण एव वीर्यमिति भावः। गुणमात्र-वीर्यवादिनस्त्वष्टविधं वीर्यमिच्छन्ति। यथा—

"मृदु तीक्ष्णं गुरुलघुस्निग्धरूक्षोष्णशीतलम्।
वीर्यमष्टविधं केचित् केचिद् द्विविधमास्थिताः॥
शीतोष्णमिति वीर्यं तु क्रियते येन या क्रिया।
नावीर्यं कुरुते किञ्चित् सर्वा वीर्यवती[1] क्रिया॥"

इति। तत्रायं प्रयोगः—गुर्वादयोऽपि वीर्यं स्पर्शत्वात् शीतोष्णवद् इति। दृष्टान्तः साधनानन्वितः। कथं, शीतं वीर्यमुष्णं वीर्य-मित्यत्र शीतोष्णशब्दौ न स्पर्शविशेषवाचकौ, सौम्याग्नेयभूतसमुदाय-वाचकौ, पृथिव्युदकाभ्यां जनितं शीतवीर्यमग्न्याकाशानिलैरारब्धमुष्णं चेति। सौम्याग्नेयत्वाज्जगतः, चन्द्रादित्ययोश्चाधोगत्यूर्ध्वगत्यात्मकत्वाद्, भूतद्वैविध्याच्च द्विविधमेव वीर्यमित्यनवद्योऽयं पक्षः॥ ३०॥

गुणपदार्थवीर्यवादिनां पक्षे वीर्यपदार्थस्य पृथगभावात् तत् पृथग् वीर्या-स्तित्वं साध्यते—

न, तुल्यरसगुणेषु विशेषभावात्॥ ३१॥

इति। नेति पूर्वपक्षप्रतिषेधार्थं, त्वयोक्तं नेति। तुल्यरसेषु तुल्यगुणेषु च विशेषो दृश्यते मधुररसं स्निग्धं शीतं च यष्टिमधुकं मन्दधाति क्षीरं च नाडगेव तत् स्रंसयतीति विशेषः। अस्य कर्मविशेषस्य दर्शनाद् एतस्माद् रसगुणाख्यात् कारणमन्यद् विद्यते। अस्य विशेषस्य साधकं तद् वीर्यमिति जानीम इति। अत्र प्रयोगः—रसगुणकारणव्यतिरिक्तान्यवस्तुनिर्वर्तितमूर्ध्वभागादिकं, तत्कारणसाम्ये फलविशेषदर्शनाद्, यत्र फलविशेषो दृश्यते तत्र तत्कारणव्यतिरि-क्तान्यवस्तुनिर्वर्तितत्वं दृष्टम्। यथैकस्य पुत्रयोराढ्यदुर्गतत्वम्॥ ३१॥

मात्राविशेषात्॥ ३२॥

तुल्यरसगुणेष्विति पक्षः। तुल्यरसगुणयोः क्षीरसर्पिषोः स्रंसने मात्राविशेषोऽन्यत्कारणमपेक्षते। तत्कारणमेतद्व्यतिरिक्तं वीर्यमस्तीति,

---

1. 'कृता' इति पाठभेदः।

तद्व्यतिरिक्तस्य तदाश्रयत्वात्। यस्य यदाश्रयं स्यात्, तस्मात् स खलु पृथगेवोपलभ्यते। यथा चित्रात् कुड्यम्। तस्माद् रसगुणेभ्योऽन्यद् वीर्यमिति गुणमात्रवीर्यवादिनं प्रत्येवं साधयितुं न शक्यते। नासौ, प्रतिज्ञानान्याश्रयत्वे न वीर्यरसगुणा रसगुणा एव वीर्यमिति प्रतिपन्नत्वात्। तस्मादयमत्रार्थः— यदि रसगुणा एव वीर्यं, यत्र रसगुणा न स्युः, तत्र वीर्यकर्माणि स्युः दृश्यन्ते चेति प्रदर्शनार्थमुक्तम् ॥ ३२ ॥

तद्व्यतिरिक्तस्य तदाश्रयत्वात् ॥ ३३ ॥

इति। तद्व्यतिरिक्तं तेभ्यो गुणेभ्यो व्यतिरिक्तं, तस्य। तदाश्रयत्वादिति। तस्याश्रयस्तदाश्रयः, वीर्यस्येत्यर्थः। रसगुणेभ्योऽन्यस्यापि वीर्यस्याश्रयस्य दर्शनादित्युक्तं भवति। एवं प्रतिज्ञायास्तूत्तरमात्रमेतदुक्तं भवति, न हेतुप्रयोगः ॥ ३३ ॥

कथमाश्रयत्वमिति तत्प्रदर्शनार्थमाह —

वीर्यविषये चानधिकारात् तेषाम् ॥ ३४ ॥

तेषां गुणानां वीर्यविषयेऽनधिकारो दृष्टः क्वचिद् दर्शनश्रवणादिषु। अनेन पताकाध्वजभेरीदुन्दुभिप्रभृत्यधिष्ठितौषधविशेषाधिष्ठानत्वं वीर्यस्य प्रदर्शितं भवति, न रसगुणा इति ॥ ३४ ॥

वीर्यस्य लक्षणमुपदिशता कर्मलक्षणं वीर्यमिति फललक्षणत्वं वीर्यस्योक्तम्। तस्मात् फलं यत्र दृश्यते, अत्रावश्यं तेनापि फलहेतुना भवितव्यमिति प्रदर्शनार्थमाह —

रसगुणव्यतिरेकेण चोपलब्धेः कर्मणस्तस्य ॥ ३५ ॥

इति। तस्य वीर्यस्य। कर्मणः फलस्येति योऽर्थः। रसगुणाभावेऽप्युपलब्धेः मन्त्रादिषु मन्त्रेण वामयन्ति मंत्रेण विरेचयन्तीति। यद् येन विना भवति तत् तस्य कारणं न भवति। यथा शाकाशितस्याङ्कुरोत्पत्तय इति। एवं तेषामभावेऽपि वीर्यस्य भावं प्रदर्श्यते ॥ ३५ ॥

तेषां रसगुणानां भावेऽपि वीर्याभावे फलानामभावं प्रदर्शयितुकाम आह —

सत्सु तेषु तस्मिंस्तस्यैवाकरणात् कर्मणः सति सम्यक् प्रयोगे ॥ ३६ ॥

इति । तेषु रसगुणेषु सत्सु । तस्मिन्निति प्रयोगे दृष्टफले पूर्वमित्यर्थः । तस्यैव कर्मणः कृतपूर्वस्य शमनस्य वर्धनस्य वा अकरणात् सम्यक् प्रयोगाभावादिति चेन्न । सति सम्यक् प्रयोगे च प्रकृत्यादिपरीक्षालक्षणे सम्यक् प्रयोगे सत्यपि फलप्रवृत्तिर्नास्तीति तद्व्यतिरिक्तमस्ति वीर्यं नामेति । यथा चक्षुषि रूपालोकनसान्निध्ये सत्यप्युपहतेन्द्रियेऽशक्ते रूपज्ञानाभावं दृष्ट्वानुमीयते चक्षुरादिव्यतिरिक्तमन्यज्ज्ञानकारणमिन्द्रियं नयनाधिष्ठानं परमसूक्ष्मं भूतप्रसादजमस्तीति, तद्वदिहापि गुणेभ्योऽन्य एव वीर्यपदार्थ इति । गुणोत्कर्षवीर्यवादी तावदेवं प्रष्टव्यः— कोऽयमुत्कर्षो नाम । स एव गुणो वा स्यादन्यो वा गुणस्यावस्था वा । यद्यन्यस्तद्वीर्यमिति, स एव गुणश्चेच्छब्दाधिकम् । अथावस्था, शैत्यस्यान्या शैत्यावस्था, उत्कर्षो नाम किमस्ति । उत्कृष्टं वा हीनं वा शैत्यमेवेति । किं तारतम्यं नेष्यते गुणानामिति । इष्यते स्वजात्यनतिक्रमेण । यथा नीलतरो नीलतम इति । किं तरतमयोगान्नीलादन्यत् पाण्डरं भवति । यत्र शैत्यमुत्कृष्टं तत्र पित्तं शमयति तद् वीर्यमिति । इदानीं शैत्यं मन्दं न किञ्चित् करोति, गुणकर्मभाव एव स्यादिति । अनेनापि पृथगेव वीर्यमस्तीति भवता प्रसाधितमिति—

"यदस्माभिरनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ।"

इति । एतत्सर्वं वृत्तमिति गतमानुषङ्गिकम् ॥ ३६ ॥

इदानीं विपाकः—

द्रव्यरसगुणवीर्याणां विपाकः ॥ ३७ ॥

इति । (ते चत्वारः पदार्थाः पच्यन्तेऽग्निना ।) तस्मादेतेषां पाकक्रिया पाकस्य विषयप्रदर्शनार्थमुक्ता । कर्मणः प्रयोगलक्षणस्याग्निना सान्निध्याभावाद् विपाकविषयता नास्ति ॥ ३७ ॥

तस्य कर्मणः को विषय इत्याह—

कर्म सर्वेषाम् ॥ ३८ ॥

इति । अत्र सर्वशब्दः । परिच्छिन्नानवशेषवाचकद्रव्यादयः

पञ्च पदार्थाः सर्वे, तेषां, कर्म प्रयोग इत्यर्थः । कथं पाकः कर्मपदार्थस्य विषयो भवति । प्रयुक्ते पश्चाद् भवतीति, प्रयोगपूर्वक एव तस्यापि व्यापार इति न दोषः । एवमत्र पचिक्रियायाः कर्ता कर्म स्यान्नाग्निः । नायं दोषो हेतुभूतत्वात् । तृणैर्भक्तं सिद्धमिति यथा ॥ ३८ ॥

एवं षडपि पदार्थाः स्वरूपप्रदर्शनेन विषयरूपेण परीक्षिताः । इदानीं तेषां भेदो विस्तरतो वर्ण्यते । तत्र द्रव्यस्य भेदः —

तत्र पृथिव्यादीनि मूलद्रव्याणि तेषां गन्धवत् ॥ ३९ ॥

इति । तत्र तेषु द्रव्यादिषु । द्रव्यस्यायं भेद इति । तत्रेति । तेषु द्रव्येषु द्रव्यशब्दस्य पूर्वोक्तस्य सामान्यत्वात् पृथिव्यादीनि पृथिव्यप्तेजोवाय्वाकाशानि मूलद्रव्याणि कारणद्रव्याणि । तेषामिति स्थावरजङ्गमानां कार्यद्रव्याणाम् । किमेतानि पृथिव्यादीनि परमाणुरूपेण व्यवस्थितानि, स्थूलद्रव्याण्येव, गन्धवदिति गुणवचनाद् । आदिशब्दप्रयोगः शास्त्रे लोके च प्रसिद्धत्वात् ॥ ३९ ॥

तेषां गुणा वक्ष्यन्ते —

गन्धरसरूपस्पर्शशब्दगुणाः पृथिव्यप्तेजोवाय्वाकाशानां, पूर्वः पूर्वोऽपकृष्यते ॥ ४० ॥

इति । शब्दादिभिः पञ्चगुणा पृथिवी पूर्वस्य पूर्वस्यापकर्षेण चतुस्त्रिद्व्येकगुणा भवन्तीति ॥ ४० ॥

क्रमशः कार्यद्रव्ये तेषामुपकारं दर्शयन्नाह —

धृतिसंग्रहपक्तिव्यूहावकाशदानैरुपकार एभिः ॥ ४१ ॥

इति । एभिर्भूतैर्यथाक्रमं धृत्यादयः कार्यद्रव्ये उपकाररूपेण क्रियन्त इति । धारणं धृतिः पृथिव्याः । संग्रहः श्लेषः विकीर्णानां पार्थिवानां परमाणूनाम् । पक्तिर्घनीभावगमनमिति क्लिन्नानाम् । व्यूहो विभागः शाखाप्रशाखादीनाम् । अवकाशदानमप्रति(घ ? घात)रूपेण व्यवस्थानमिति ॥ ४१ ॥

तस्मात् तन्मयं द्रव्यम् ॥ ४२ ॥

यस्मादेवमेतेषां पञ्चानां भूतानां गुणोपकारो दृश्यते कार्यद्रव्ये, तस्मात् तन्मयं पञ्चभूतमयं सर्वं स्थावरजङ्गमात्मकं द्रव्यमिति ॥ ४२ ॥

समाख्या पुनरुच्छ्रयेण ॥ ४३ ॥

इति। भौममाप्यमिति समाख्या पुनरत्र शास्त्रेषूपलभ्यमाना उच्छ्रयेणाधिक्येनेत्यर्थः। पुनर्ग्रहणं तन्त्रे प्रसिद्धस्य प्रदर्शनार्थम् ॥ ४३ ॥

द्रव्याणां पाञ्चभौतिकत्वमनुपपन्नमिव मन्यमानः (आह) कश्चिदाह—

तदसम्यक्, चाक्षुषाचाक्षुषाणामचाक्षुषत्वात् संयोगस्य ॥ ४४ ॥

इति। तदिति पाञ्चभौतिकत्वम्। (असम्यक्) कुत इति। चाक्षुषाणां चक्षुर्ग्राह्याणाम्, अचाक्षुषाणां चक्षुषा द्रष्टुमशक्यानां, तेषां चाक्षुषाणां संयोगस्तावदचाक्षुषो दृष्टः। तद् यथा — अङ्गुल्याकाशसंयोगो वायुवनस्पतिसंयोग इति। तस्मादिदमपि द्रव्यमचाक्षुषं स्यादिति। एतदुक्तं भवति—इह वैशेषिकाणां द्रव्याणां युक्तानामेव भवति। तन्तवोऽप्यातानवितानभावेन संयुक्ताः पटद्रव्यमारभन्ते। नासंयुक्ताः। तस्माद् भूतान्यपि संयोगपूर्वं यदि कार्यद्रव्यमारभेयुः। तत्र वाय्वाकाशावचाक्षुषौ, पृथिव्युदकज्वलनानि च चाक्षुषाणि, तानि भूतानि यदा संयुक्तानि भवन्ति, तदानीं द्रव्यमचाक्षुषं स्यादिति, चाक्षुषाचाक्षुषसंयोगस्याचाक्षुषत्वात्। कस्मात्, पार्थिवाप्यतैजसान्येव द्रव्याणि चाक्षुषाणि दृश्यन्ते। तेन जानीमो न पाञ्चभौतिकानि कार्यद्रव्याणीति ॥ ४४ ॥

तत् समीकर्तुकाम आह —

स्थूलाणुकार्यवच्चाप्यक्षुत्वम् ॥ ४५ ॥

(इति। चाक्षुषत्वं) प्रदर्शयति कथमिति। जातस्य दारकस्याङ्गुलिद्रव्यं स्थूलम्। तस्येदानीं कालान्तरेण वृद्धिरुपलभ्यते। उपचयसहिता सा वृद्धिः कथं भवतीति। वाह्याः परमाणवस्तदुपचययोग्यास्त्वदृष्टदृष्टप्रेरिता उपसर्पन्ति। तदुपसर्पणादुपचयो जायते तत्र। स चोपचयश्चाक्षुषस्याङ्गुलिद्रव्यस्याचाक्षुषाणां परमाणूनां च संयोगलक्षणश्चाचाक्षुषो दृष्ट इति ॥ ४५ ॥

तत्र वैशेषिकस्योत्तरावकाशमाशङ्क्याह —

त(दे ? दने)कद्रव्य(त्वा ? व)दिति चेत्, तदितरत्र तुल्यम् ॥ ४६ ॥

इति । तत् स्थूलद्रव्यमङ्गुल्याख्यमनेकद्रव्यवदणुसञ्चयत्वादित्यभिप्रायः । वैशेषिकाणां हि द्विविधं द्रव्यम् । अद्रव्यमनेकद्रव्यं चेति । अद्रव्यं परमाणवः । नास्मिन्नद्रव्यं विद्यत इति सञ्चयो न भवतीति । अनेकद्रव्यसंयोगस्य चाक्षुषत्वमिष्यत एवेति चेत्, कार्यद्रव्येऽनेकद्रव्यत्वं तुल्यमिति, "यश्चोभयोस्तुल्यो न तेन पर्यनुयोक्तव्यः" इति ॥ ४६ ॥

एवं चाक्षुषत्वं पाञ्चभौतिकत्वं च साधितं कार्यद्रव्यस्य, इदानीं पुनरपि कार्यद्रव्ये भूतानामुपकारं प्रदर्शयति —

बृंहणक्लेदनपचनकर्षणविवरणानि, तेभ्यः सङ्घातह्लादनप्रकाशशैघ्र्यसौषिर्याणि च ॥ ४७ ॥

इति । एतानि बृंहणादीनि यथाक्रमं पृथिव्यादिभ्यः कार्यद्रव्येषु जायन्ते इति । बृंहणमवयवानामुपचयः पृथिव्याः । क्लेदनम् अपाम् । पचनं परिणामोऽग्नेः । कर्षणं तेषामेवापचयो वायोः विवरणं छिद्रप्रदानमाकाशस्येति । एतानि सङ्घातादीनि च यथाक्रमं पृथिव्यादीनामुपकारः ॥ ४७ ॥

इदानीं भूतानां क्रियोच्यते —

अधस्तिर्यगधश्चोर्ध्वं सर्वत इति क्रिया चतुर्णाम् ॥ ४८ ॥

इति । गुरुत्वादधोगतिः पृथिव्याः, तिर्यगपां स्यन्दनत्वात्, अधश्च गच्छन्त्यापो गुरुत्वाद्, ऊर्ध्वगतिरग्नेः, सर्वतोगतिर्वायोः विष्वग्वातादिषु दर्शनादिति चतुर्णां भूतानामेताः क्रियाः । इतिशब्दः क्रियानिदर्शनार्थः । निष्क्रियं, खमित्युत्तरार्थः । चतुर्णामिति संख्या । सर्वगतत्वादाकाशं निष्क्रियं, स्पन्दनाभावात् ॥ ४८ ॥

कस्मादयं क्रियाभेद इति । गौरवं लाघवं चाङ्गीकृत्येति ज्ञापयन्नाह —

पूर्वं गुरूणि लघून्युत्तराणि ॥ ४९ ॥

इति । पूर्वे गुरुणी लघून्यपरे इति । उक्तानुपूर्व्यां पृथिव्युदके पूर्वे गुरुणी भवतः । शेषाण्युत्तराणि वाय्वग्न्याकाशानि लघूनि ।

कथमाकाशस्य लाघवं, रूपाभावमात्रत्वाद् आकाशस्य। विवेकतामङ्गी-कृत्योक्तमित्यदोषः ॥ ४९ ॥

इदानीं गुणानां भेदप्रदर्शनार्थमाह —

कालनीललोहितपीतावदाता वर्णाः ॥ ५० ॥

इति। वर्णा वर्णभेदा इति। वर्णशब्दो रूपपर्यायः। लोके गता एवेति न वर्ण्यन्ते। उद्देशक्रमभेदोऽत्रानियतत्वाद् गुणक्रमस्य। साङ्ख्यानां शब्दादयः वैशेषिकाणां रूपादयः अक्षपादस्य गन्धादय इति ॥ ५० ॥

अयं पुनर्वर्णस्तैजसः, तस्येतरभूतसंसर्गाद् भेद इति ज्ञापयन्नाह —

उत्तरोत्तरस्तैजसो मन्दत्वाद् ॥ ५१ ॥

इति। उत्तरोत्तर इत्युक्तेन क्रमेण कालस्य नीलमुत्तरं नीलस्य लोहितमित्यादि। एवमग्नेः क्रमेण मान्द्य उक्ते अवदाते तेजसः सर्वथा क्षय इत्युक्तो भवति ॥ ५३ ॥

तस्मिन्नवदाते कतरद् भूतमाधिक्येन वर्तत इति न ज्ञायत इत्याह —

अपां पूर्वः पूर्वः ॥ ५२ ॥

इति। अपां मन्दत्वात् पूर्वः पूर्वो वर्णो भवतीति। अवदाते-ऽपः प्राभूत्येन वर्तन्ते। अवदातात् पूर्वः पीतशब्दः। तथा धर्माधर्मा-दीनामन्यकारणात्पन्नानामात्मनि समवेतानामात्मगुणत्वमिष्यते।

*सुरभिरसुरभिश्च गन्धः ॥ ५३ ॥

इति। गन्धत इति गन्धः। द्विविध एव च गन्धः। सुरभि-र्नाम घ्राणमनःप्रीतिजननः। असुरभिस्तद्विपरीतः ॥ ५३ ॥

श्यावगन्धश्चेत्येके ॥ ५४ ॥

एके आचार्याः तृतीयं गन्धविशेषम् इच्छन्ति, (श्यावगन्धो हरिमगन्ध इत्यर्थः। पटोलफलादीनां गन्धवत्) ॥ ५४ ॥

तयोः कारणं —

सुरभिः समत्वाद् भूतानाम् ॥ ५५ ॥

---

* 'सत्त्वाभिसंस्कारवाग्भेदःभूतसंक्षोभनिमित्तो वायुरेव बलवान्' इद सूत्रम् एतद्व्याख्या चात्रादर्शे न दृश्यते।

भूतसाम्या(त्)सुरभिर्जायते, तेजसो बलवत्त्वादसुरभिः । अग्निर्यदा यस्मिन्नाधिक्येन वर्तते, तत्रासुरभिर्गन्धो भवति । श्यावगन्धो वा वायोरिति । तृतीयगन्धवादिनामयमभिप्रायः— वायोराधिक्याद् भवतीति ॥ ५५ ॥

रसाश्च गुणसामान्येनात्र भेदवचनावसरप्राप्ता व्युदस्यन्ते —

परस्तादुपदेक्ष्यन्ते रसाः ॥ ५६ ॥

इति । तेषां भेदोत्पत्तिलक्षणकारितावचरणविभागास्तृतीयेऽध्याये विस्तरतो वक्ष्यन्ते इति ॥ ५६ ॥

इदानीमवशिष्टः कतिधा भिन्न इत्याह —

शीतोष्णगुरुलघुमृदुकठिनकर्कशश्लक्ष्णाः स्पर्शाः ॥ ५७ ॥

इति । एवमष्टधा भिन्नः स्पर्शः । एवमेते शीतादयः स्वसंवेद्यस्वरूपा लोक (कफा ? गता) इति न विपञ्च्यन्ते ॥ ५७ ॥

तेषां कारणमाह —

तैजसं श्लक्ष्णत्वं नाम ॥ ५८ ॥

सुमृन्मणीनामिव स्पर्शः । स खलु भास्वरसामान्यादग्निनोत्पद्यते । आग्नेयत्वान्मृत्स्नायाः ॥ ५८ ॥

कठिनत्वं पार्थिवम् ॥ ५९ ॥

पृथिवीनिर्मितं काठिन्यं भवतीति कठिनस्वभावा पृथिवी ॥५९॥

कर्कशत्वं वायव्यम् ॥ ६० ॥

वायुः शोषणात्मकत्वाद् व्यूहकरणाच्च पद्मनालादिषु कर्कशत्वहेतुर्भवति ॥ ६० ॥

शेषा वक्ष्यन्ते परस्तात् ॥ ६१ ॥

शेषाः शीतादयः पञ्च गुणपदार्थावरोधाद् गुणपदार्थकारणवचने वक्ष्यन्त इति । अत एवात्र क्रमभेदश्च कृत इति । कथमत्र वायोर्गुणस्य स्पर्शस्य शेषभूतहेतुत्वमिति । वायोरेवासौ गुणः,

वायव्येन्द्रियग्राह्यत्वात् । तथा अन्यानि भूतानि भेदहेतवो भवन्ति । यथा रसे वर्णे च ॥ ६१ ॥

(न)गुरुप्रभृतयः स्पर्शा इति केचित् ॥ ६२ ॥

(केचित्) पुनराचार्याः शीतोष्णाभ्यामन्ये गुरुप्रभृतयः स्पर्श-विशेषा न भवन्तीति मन्यन्ते । द्रव्यविशेषा इति तेषां मतम् ॥ ६२ ॥

तेषामस्पर्शत्वहेतवोऽभिधीयन्ते —

द्रव्ये सत्यभावात् ॥ ६३ ॥

गुरुप्रभृतीनां भावो भवति । यथा चर्म मृदु गुरु च श्लक्ष्णं च । तदेवं शुष्कं कठिनं लघु कर्कशं च भवति । चर्म न विनष्टं तदेवेति । मृद्वादयः पूर्वका विनष्टा इति । शीतोष्णस्पर्शावुदकाग्न्यो-रविनाशे न विनश्यतः । तस्मात् स्पर्शधर्मव्यतिक्रमेणैते स्पर्शा इति । अत्र प्रयोगः—न गुरुप्रभृतयः स्पर्शाः, स्वाश्रयनिरपेक्षविना-शित्वात् शब्दवद् । यत् स्वाश्रयेण सह विनाशि स स्पर्शः । यथा शैत्यमौष्ण्यं च । अत्र कथमुष्णोदके तदुदकाविनाशेऽपि शैत्यस्य विना(शो) दृष्ट इति । नात्र तच्छैत्यं विनष्टं, पुनरपि तच्छैत्योपलब्धेस्तदानीं तत्राप्सु तेजः परमाणवो ह्यदृष्टप्रेरिताः कपालसंयोगान्तरेणापः स्पृशन्ति । विनष्टानां तेषाम् अग्निपरमाणूनां तदौष्ण्यम । तेनाभिभूतत्वाच्छैत्यं न गृह्यते । तथापि अरामूर्ध्वमुदसनक्वथनादिदर्शनादग्नेः प्रवेशोऽनु-मीयते । अरां तिर्यक्स्यन्दनाधोगमनं हि कर्मेति । पुनस्तेषु निर्गतेषु तच्छैत्यं पूर्ववद् अप्सु गृह्यत इति ॥ ६३ ॥

नैमित्तिकत्वात् ॥ ६४ ॥

निमित्तं हि कारणं हेतुः । तेन (निर्वेस्तितयं ?) नैमित्तिकम् । कारणान्तरेणाभ्युपगम्यन्ते गुरुप्रभृतयः । नैवं शीतोष्णौ तदाधारसद्भा-वात्तावेवेति कठिनं चर्म मर्दनलेखनादिभिर्मृदु भवति । तल्लघु द्रव्यं मदार्द्रीकरणमग्नतादिभिर्गुरु भवति । गुरु च शोषणाल्लाघव-मुपयाति । गुरुप्रभृतयः स्पर्शाः कारणान्तरसाध्यत्वाद् गन्धवत् ॥६४॥

अपेक्ष्यसिद्धेः ॥ ६५ ॥

न गुरुप्रभृतयः स्पर्शाः । मृद्वपेक्ष्य कठिनबुद्धिर्भवति । कठिन-

मपेक्ष्य मृदुबुद्धिः। एवं शेषमपि। यत्रापेक्ष्यसिद्धिस्तत्र स्पर्शत्वं नास्ति। यथा ह्रस्वदीर्घयोरिति योज्यम् ॥ ६५ ॥

द्वयोरेकत्र भावाद् ॥ ६६ ॥

न गुरुप्रभृतयः स्पर्शाः। गुरुप्रभृतयो हि द्वावेकत्र भवतः। यथा कदलीफले गौरवं मार्दवं च, यथा ह्ययोगुले गुरुत्वं श्लक्ष्णत्वं कठिनत्वं च, नैवं शीतोष्णाविति। एवं सत्यत्र वचनावकाशो विद्यते। शीतोष्णौ परस्परविरुद्धत्वादेकत्र न भवतः। अत्रापि काठिन्यमार्दवे युगपन्न भवत इति तस्मादत्रायमन्य एवाभिप्रायः। द्वयोरेकत्र भावाद्। इति। एकेन्द्रियग्राह्याणामेकदेश्यमनुपपन्नम्। तच्च तेषां युगपत् स्थानं दृष्टमिति न स्पर्शविशेषा इति ॥ ६६ ॥

वैधर्म्येण साधयति —

इन्द्रियान्तरेण ग्रहणाच्च ॥ ६७ ॥

इन्द्रियान्तरेण गुरुप्रभृतयो दृश्यन्ते। यथाश्म घनं दृष्ट्वा गुरुरिति जानाति, तूलराशिं दृष्ट्वा लघुरिति। स्पर्शस्येन्द्रियान्तरेण ग्रहणं नास्ति, स्वसंवेद्यत्वादित्यभिप्रायः। चशब्दो हेतूनां समुच्चयार्थः ॥६७॥

"द्रव्ये सत्यभावादि"त्यस्य हेतोरसिद्धतामुत्थापयन्नाह —

द्रव्ये सत्यभावः स्पर्शान्तरोत्पत्तेर्गन्धरसरूपवद् ॥ ६८ ॥

इति। द्रव्ये सत्यभाव इत्युक्तं यद् भवता, तदस्मान् प्रत्यसिद्धं, द्रव्ये स्थिते स स्पर्शो न विनष्ट इति। किं तर्हि। स्पर्शान्तरं तदुत्पन्नम्। तत्र पूर्वं तच्चर्माणामाधिक्यया (द्) (मृतिः? मृदु) सञ्ज्ञा (ता? तम्)। तच्च स्पर्श एवास्माकं, न पुनरपां परिक्षयाद्। यदा पृथिव्युद्भूता भवति, तदानीं काठिन्यं स्पर्शान्तरमुद्भूतमात्मनो हेतुमुपलभ्य। एवं पूर्वस्य स्पर्शस्याभावः। यथैवाप (ण:? वै) स्पर्शान्तरोत्पत्तिर्द्रव्ये सति। स्पर्शान्तरोत्पत्तिरेवं भवतीति दृष्टान्तेन समर्थयति—गन्धरसरूपवद् इति। द्रव्ये सत्येव गन्धरसरूपाण्युत्पद्यन्ते पूर्वगन्धरसरूपाण्यभिभूय। यदा कदलीफले तरुणे गन्धरसरूपाण्यन्यादृशानि पक्वे तान्येवान्यादृशानि भवन्तीति ॥ ६८ ॥

पूर्वपाक्षिकस्तु दृष्टान्तस्यासमानतां प्रसञ्जयतीत्याशङ्कयाह —

द्रव्यान्तरादिति चेत् तदितरत्र तुल्यम् ॥ ६९ ॥

इति। द्रव्ये सत्येव गन्धरसरूपाणामुत्पत्तिरिति यदुक्तं कदलीफले तन्नोपपद्यते, द्रव्यान्तरत्वात्। तरुणात् कदलीफलात् पक्वं फलमन्यदेव, रसभेदात् क्षीरं पटोलात्, कार्यभेदात् सिंहसृगालवत्। तस्मादन्येन तरुणेन कदलीफलाख्येन द्रव्येण सहैव पूर्वका गन्धादयो विनष्टाः। पक्वे चान्येन द्रव्येणोत्पन्नाः। अत्र पुनस्तस्मिन्नेव चर्मणि स्थिते चर्मणि मृदुता नष्टा काठिन्यमुत्पन्नमिति द्रव्ये सत्यभाव इति युक्तम्। तस्मान्न तुल्योऽयं दृष्टान्त इति। अत्राह—तदितरत्र तुल्यमिति। इतरत्रापीत्यपिशब्दलोपो द्रष्टव्यः। यद् यत्र कदलीफले द्रव्यान्तरत्वमभ्युपगम्यते, चर्मण्यपि तत् तुल्यम्। आर्द्रचर्मणः शुष्कं चर्मान्यत् रूपभेदात् काकमयूरवत्। स्पर्शभेदादुल्काग्निवत् इति। कस्यायमभिसन्धिर्द्रव्यान्तरमिति। यदि साङ्ख्यस्य, नासौ वाञ्छति, अवस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भावः परिणाम इति वचनात्। वैशेषिकाणामपि कालान्तरावस्थाय्यनित्यताभ्युपगमान्न युक्तम्। यस्य कस्य वा भवतु, किमनया सूक्ष्मिकया। आचार्येण तावत् पर्यैरवश्यमभ्युपग(न्तव्यं ? तं) द्रव्यान्तरमित्यवगन्तव्यम्। अन्यथा दधिक्षीरादीनां भेदो न स्यादिति चिकित्सैव न स्यात् ॥ ६९ ॥

नैमित्तिकत्वमवर्ण्यमपेक्ष्यसिद्धिश्च ॥ ७० ॥

अवर्ण्यमवाच्यं कारणान्तरनिर्वर्त्यत्वात् ॥ ७० ॥

नैते स्पर्शविशेषा गुरुप्रभृतयः अपेक्ष्यसिद्धेश्चेत्युक्तं न वाच्यम्। कुत इति —

उभयं ह्येतत समानमितरैः ॥ ७१ ॥

इति। एतदुभयमितरैः समानं हि। उभयमिति यदुक्तं भवता शीतोष्णलक्षणं स्पर्शत्वेन, एतदुभयमितरैर्गुरुप्रभृतिभिः समानं नैमित्ति(काश्चा ? कत्वा)पेक्ष्यसिद्धिभ्याम्। कथमिति। उष्णोदकभोजनादि व्यजनवातशीतोदकसेकादिभिः शीतीक्रियते। उपनाहालिङ्गनप्रावरणाग्निसेवनादिभिः औष्ण्यं चोपजन्यते। अस्मादिदं शीतमस्मादिदमुष्णमिति चापेक्ष्यसिद्धिर्विद्यत इति ॥ ७१ ॥

द्वयोरेकस्य भावादित्युक्तस्योत्तरमाह —

रसवद् द्वयोरेकत्र भावाद् ॥ ७२ ॥

इति। एकेन्द्रियग्राह्याणामेकदेश्यं दृष्टं, रसवद् द्वयोरेकत्र भावात्। तद्यथा—आम्रफलं मधुराम्लं मधुरकषायं मध्विति। तस्मादयं हेतुरनैकान्तिक इति ॥ ७२ ॥

इन्द्रियान्तरेण ग्रहणादित्यस्योत्तरम्—

उष्णवद् ग्रहणमिन्द्रियान्तरेण ॥ ७३ ॥

इति वेदितव्यम् ॥ ७३ ॥

कथमिति—

अनुमानादिति चेदितरत्र तुल्यम् ॥ ७४ ॥

इति। कथमुष्णस्पर्शश्चक्षुषा गृह्यते, स्पर्शनेन्द्रियेण प्रत्यक्षत उपलभ्यते। तस्माद् भास्वरं रूपं चक्षुषा दृष्ट्वा पूर्वानुभूतद्वारेण तद्रूपाविनाभाविनं स्पर्शविशेषमनुमिनोति। न तेनेन्द्रियेण चक्षुषा स्पर्शो गृह्यत इति चेत्। तत्रापि गुरुप्रभृतिष्विन्द्रियान्तरग्रहणमनुमानादिति प्रतिपद्यताम्। अनुमानं पूर्ववद् योज्यम्। एतेषां सूत्राणां केचिदन्यथार्थं ब्रुवते गुणप्रभृतीनां गुणत्वप्रतिषेधमिव मन्यमाना हि 'उभयं ह्ये(त)त्समानमितरैरि'ति। उभयं नैमित्तिकत्वमपेक्ष्यसिद्धिश्च तुल्यमितरै रूपादिभिरिति वर्णयन्ति। कथमत्र रूपादीनां सम्बन्धः। अथापि कथं तत्सम्भव इति न गुरुप्रभृ (ते ? तयः) स्पर्शा इति वाक्ये सति ॥ ७४ ॥

एवं गुरुप्रभृतीनां स्पर्शत्वं प्रसाध्य शीतोष्णस्पर्शवादिनां पक्षे तृतीयस्य स्पर्शान्तरस्य प्रदर्शनार्थमाह—

अनुष्णशीतं पुनस्तृतीयम् ॥ ७५ ॥

इति। ये खलु शीतोष्णौ द्वौ स्पर्शाविति, ते पुनरनुष्णशीतं तृतीयं स्पर्शमिच्छन्तीति पुनश्शब्दः, त एव न वयमित्यर्थः। मन्दोष्णे वा मन्दशीते वावरोधादिति ॥ ७५ ॥

सामान्येन द्रव्यमुक्त्वेदानीं भेदतो वक्तुकाम आह—

द्रव्यं स्थावरं जङ्गमं च ॥ ७६ ॥

इति। यदुक्तं पूर्वं द्रव्यमिति, तद् द्विधा भिन्नं स्थावरं जङ्गममिति ॥ ७६ ॥

वृक्षवीरुदोषधिवनस्पतिप्रभृति (स्थावरम्) ॥ ७७ ॥

तत्र द्वयोरेवंप्रभृति स्थावरं भवति । तत्र —
"वृक्षाः पुष्पफलोपेताः लतावल्यस्तु वीरुधः ।
ओषध्यः फलपाकान्ताः फलपुष्पी वनस्पतिः ॥"
इति । प्रभृतिशब्दात् पाषाणमणिधातवश्च परिगृहीता इति ॥ ७७ ॥

तस्य निर्वृत्तिः ॥ ७८ ॥

इति । इदं वाक्यमधिकारार्थमुक्तम् । तस्य स्थावरस्योत्पत्तिः सभेदा साधिकारतो वक्ष्यत इति ॥ ७८ ॥

तेजोऽन्तरं करोति ॥ ७९ ॥

तेजोऽग्निरन्तरं छिद्रं करोत्यभिनिर्वर्तयति । अङ्कुरस्याविर्भावद्वारं करोतीति । कथमिति । यदा खलु बीजमुप्तं क्षेत्रे तदा क्षेत्रोदककालसमवाये बाह्याश्चतुर्विधाः परमाणवो बीजं प्रविशन्ति । तेषां प्रवेशात् पूर्वकः संयोगो बीजद्रव्ये व्यपैति । परमाणूनामेवं करणविभागात् कार्यद्रव्ये विभक्ते परमाणुत्वे व्यवस्थिते बीजस्थेनाग्निपरमाणुना पृथिव्यप्परमाणवस्तद्बीजमुखस्था दह्यन्ते । ततो वायुस्तावद् विधमति । एवमन्तरं भवति ॥ ७९ ॥

ततः कथमङ्कुर इत्याह —

बीजेऽद्भिः संसृष्टां पृथिवीमभिनिर्हरति वायुस्तस्मात सोऽङ्कुरः ॥ ८० ॥

बीजे बीजाधारव्यवस्थितां पृथिवीं पृथिवीपरमाणून् केवलानद्भिः संसृष्टा(न्) मिश्रानद्भिर्निर्हरति निष्कर्षति वायुः । तेन द्वारेण तस्माद् बीजात् सोऽङ्कुर इति । एवमुक्तं भवति — पार्थिवानणून् विप्रकीर्णानिष्पसङ्ग्रहपिण्डितानग्निना परिगृहीतान् मूर्तभावमापन्नान् लब्धावकाशाद् वायुरङ्कुराकारेण तेन द्वारेण निष्कर्षति । तस्याङ्कुर इति संज्ञेति ॥ ८० ॥

तस्योत्पन्नस्येदानी भूतैरुपकारः —

विवर्धमानस्य पृथिव्या वृद्धिरद्भिर्जीवनमग्निना परिग्रहोऽभिनिहारो वायुनावकाशे ॥ ८१ ॥

इति । विवर्धमानस्य स्कन्धविटपशाखापलाशपुष्पफलात्मना आत्मोपचयमुपलभमानस्य । तद्विवर्धनं पृथिव्या भवति, रोहणात्मकत्वात् । जीवनमद्भिर्भवति । परिग्रहः सङ्ग्रहः अग्निना तथा विशेषोऽपि अग्निना ॥ ८१ ॥

तेषां विकारभेदाः —

यावदृजु परिगृह्णाति तेजस्तावदृजुर्ग्रन्थिश्च स्कन्धः ॥ ८२ ॥

इति । पृथिव्यप्परमाणून् संपिण्डितान् अग्निना परिगृहीतानूर्ध्वमभिप्लवमानान् अग्निर्यावत्प्रमाणमृजु परिगृह्णाति, तावदृजुरग्रन्थिश्च स्कन्धो भवति वृक्षादीनाम् ॥ ८२ ॥

यत्रावतिष्ठते तेजस्तत्र ग्रन्थिः ॥ ८३ ॥

इति । एवं ग्रन्थिर्जायते । तेजः खलु तस्मिन् स्कन्धे परिग्रहं कुर्वत् व्यवस्थितं स्वात्मन एवैकदेशेन पृथिव्यप्परमाणून् संगृह्यावतिष्ठते एकतः पार्श्वतोऽवतिष्ठते । स च स्कन्धश्च पूर्ववीच्या गच्छत्येव । यत्रेदं तेजः स्थितं, तत्र ग्रन्थिर्भवति ॥ ८३ ॥

सौषिर्यं कथमित्याह —

यत्रावस्थितमेतद्धीयते तेजोऽनुविधमति नचैनं वायुस्तत्र सुषिरम् ॥ ८४ ॥

इति । यत्र यस्मिन् स्कन्धे शाखायां वावस्थितं तेजः परिग्रहं कृत्वा तत्तेज अन्तर्धीयते परिग्रहकर्म न करोति वायुनान्यत्र नीयते अनुविधमति व्य (गत्वा ? वगा) हते तत्प्रदेशस्थान् पृथिव्यप्परमाणून् वायुस्तत्र सुषिरं भवति ॥ ८४ ॥

कुब्जत्वं कथमिति —

यत्रावस्थितमेकतोऽवनमति तत्र कुब्ज(त्व)म् ॥ ८५ ॥

यत्र यस्मिन् प्रदेशे अवस्थितं तेजः आत्मना परिगृहीतैरणुभिरेकतोऽवनमति, तत्र कुब्जत्वं भवति ॥ ८५ ॥

स्कन्धस्य वा द्वैतत्वं कथमिति —

यत्रावस्थितमुभयतो वीचीर्ददाति पृथिव्यम्भसी चाभिनिर्हरत्यनिलस्तत्र द्वैतलम् ॥ ८६ ॥

तलं तत्रावस्थितं तेजः पृथिव्यप्परमाणूनां वीचीर्द्वौ द्वौ भागौ ददाति करोति । पुनस्तान् द्विधा परिगृहीतानब्भिपरमाणून् वायुरभिनिर्हरति द्वेधेव, तत्र द्वैतलं भवति । मूलात् प्रभृति स्कन्धतो द्वैतलम् ॥ ८६ ॥

कथं विटपा इति —

यत्रावस्थितमनेका वीचीर्ददाति पृथिव्यम्भसी चाभिनिर्हरत्यनिलस्तत्र विटपम् ॥ ८७ ॥

पूर्ववत् प्रक्रियाविशेषः । अत्र पुनरनेका वीचीर्मेङ्गान् ददातीति विशेषः ॥ ८७ ॥

पत्राणां विकारः कथमिति —

दीर्घवृत्ततिर्यक्चतुरश्रत्वं तेजसः परिग्रहवशात् पत्राणाम् ॥ ८८ ॥

दीर्घत्वमिन्द्रवृक्षपत्राणां, वृत्तत्वं पद्मपत्रादीनां, शेषं तद्वत् । सर्वं तेजःपरिग्रहवशाद् भवति । यदि दीर्घाकारं परिगृह्णाति, दीर्घाणि भवन्ति । तथान्यत्रापीति । यद्येवं, कस्मादब्भिः पद्मपत्राणि दीर्घाकाराणि न गृह्णाति, तत्तद्बीजस्वभावेन भूतानि समारभन्ते । कस्मात् कुम्भकारः परिमण्डलाकारं घटं मृदैव निर्वर्तयति । शिलापिण्डेन (न) निर्वर्तयतीति । तत्र तत्तत्कारणपरिच्छित्तिधातुनानात्वज्ञानं नाम महतां सर्वज्ञानामेव भवति, नान्येषामिति ॥ ८८ ॥

कथं पत्राणामग्राः —

यत्रावस्थितमुपपीड्य मध्येऽनुपूतः परिहीयते तेजस्तत्र पत्रशाखाः ॥ ८९ ॥

यथाश्वत्थपत्राणि ॥ ८९ ॥

पत्ररेखा कथमिति —

विटपेन पत्रलेखा व्याख्याताः ॥ ९० ॥

विटपेन पूर्वोक्तेनानेकवीचीप्रदानादिभिर्निर्हरणमवानेनातिदेशेन परिगृह्णाति। पत्राणामुपरि लेखाः पत्रलेखाः सिरा इति ॥ ९० ॥

अवयवानामृजुत्वं वक्रत्वं च कथमिति —

शाखापलाशकण्टकानां स्कन्धवदृजुत्वं वक्रत्वं च ॥ ९१ ॥

गृहीतानां वायुनाभिनिर्ह्रियमाणानां यत्राग्निपरिग्रहनिमित्तमवस्थानं भवति, तत्र पर्व जायते । पुनरपि वायुना निगृह्य (ह्) न्यमानानामूर्ध्वाहतिर्भवति, तत्र काण्डं भवति। पुनश्च तेजोवशादवस्थानं भवति। तत्र पर्व जायत इति। केषाञ्चिद् वेणूनां पर्वाणि दीर्घान्तराणि भवन्ति, केषाञ्चित् ह्रस्वान्तराणि, तत्र को हेतुरिति। सन्निकर्षात् तेजसः, अग्नेरवस्थानविशेषात् सन्निकृष्टत्वं विप्रकृष्टत्वं वा पर्वणां भवति । यदि पूर्वकात् पर्वणः सन्निकृष्टे देशे स्थितं भवति, सन्निकृष्टं पर्व भवति। अन्यथा विप्रकृष्टमिति ॥ ९१ ॥

एतेन पुष्पफलं व्याख्यातम् ॥ ९२ ॥

एतेनोक्तेन विधानेन, पुष्पफलं च व्याख्यातं भवति। कथमिति। पुष्पफलानां गन्धवर्णरसभेदो दीर्घकुटिलादिभेदश्चेत्युक्तं भवति ॥९२॥

अभिसर्पणादीनि च वल्लीप्रभृतीनाम् ॥ ९३ ॥

अभिसर्पणं गतिर्वायुनाभिनिर्हरणादग्निना परिगृहीतं गच्छति। एवमाद्यनेनैव व्याख्यातमिति । प्रभृतिशब्दाद् गुल्मगुच्छतृणानि च परिगृहीतानि ॥ ९३ ॥

पद्मादीनां पुष्पाणां पत्रादिभेदः कथमिति —

विटपवत् पत्रकेसरकर्णिकाप्रभृतीनाम् ॥ ९४ ॥

यथा विटपानां सम्भवः, तथा तेषां पत्रबहुत्वं केसरोत्पत्तिश्च ज्ञेय इति ॥ ९४ ॥

पद्मप्रभृतीनां सम्मीलनादि कथमिति —

सम्मीलनमद्भिरुन्मीलनं तेजसा ॥ ९५ ॥

भवतीति वाक्यशेषः। सम्मीलनं संकोचनमुन्मीलनं विकचनं,

संकोचः साम्यभावेन भवति, विकसनमाग्नेयेन ॥ ९५ ॥

कथं कुमुदादीनां चन्द्रेण बोधनं सूर्येण सम्मीलनमिति —

चन्द्रश्चाग्नेय एव ॥ ९६ ॥

उक्तं हि—

"आदित्यश्चन्द्रमास्तारः कृष्णो लोहितकः सितः।
यच्चान्यदेवञ्जातीयं सर्वं तत् तैजसं स्मृतम् ॥"

इति ॥ ९६ ॥

अवेक्षितव्यमन्यत् ॥ ९७ ॥

अन्यदवशिष्टं स्थावरगतं विकारजातमनयैव दिशावेक्षितव्यं चिन्तनीयम् ॥ ९७ ॥

कथं द्रव्यवैषम्यमित्याह —

भूतोत्कर्षापकर्षसन्निवेशविशेषाद् द्रव्यवैषम्यम् ॥ ९८ ॥

भूतानामुत्कर्षः उपचयो वृद्धिरिति योऽर्थः। अपकर्षोऽपचयः हीनता। उत्कर्षवानपकर्षवांश्च सन्निवेशविशेषः नास्माभिः परीक्षितमस्तीति ॥ ९८ ॥

अत्राचार्यभेदो विद्यते —

पाञ्चभौतिकं शरीरमित्येके ॥ ९९ ॥

पार्थिवमित्येक इति ॥ ९९ ॥

तस्य प्रदर्शनार्थमात्मपक्षदृढीकरणार्थं चायमारम्भः —

पञ्चात्मकं लिङ्गदर्शनात् पञ्चानाम् ॥ १०० ॥

इति। पञ्चभिर्भूतैर्निर्वर्तितं पञ्चभूतनिर्वर्तितं शरीरं तल्लिङ्गदर्शनात् निःश्वासप्रश्वासशीतोष्णादीनां दर्शनाद्। यद् येन निर्वर्तितं तत्तल्लिङ्गं दृष्टम्। यथा घटशरावादि मृन्निर्वर्तितं मृल्लिङ्गमिति ॥१००॥

स्वपक्षसाधनव्याजेन परस्य हेतोरनैकान्तिकत्वं च दर्शयन्नाह —

तस्य पार्थिवस्यैव सतः संयोग इतरैरित्येके ॥ १०१ ॥

इति। पार्थिवमेवेदं शरीरम्। पृथिव्येकेव शरीरारम्भकारिणी। तयारब्धे शेषाणि भूतानि तेन तत्र संयुक्तानामपि लिङ्गमेकत्र दृश्यते। यथा लवणमरिचगुलानां सक्तुपिण्डे इति ॥१०१॥

अभिभूतानां युगपदनारम्भकत्वे हेतुमाह —

क्रियाविरोधाद् भूतानाम् ॥ १०२ ॥

भूतानि परस्परविरुद्धानि क्रियामुखेन तिर्यगूर्ध्वाधोगतिक्रमेण ॥ १०२ ॥

पाञ्चभौतिकमिति प्रतिषेधः। इदमपि हेत्वन्तरम् —

गुणभूयस्त्वस्यादर्शनात् ॥ १०३ ॥

इति। गुणभूयस्त्वं गुणबाहुल्यं तस्य बाहुल्यस्यानेकेषु भूतेष्वदर्शनात् ॥ १०३ ॥

पृथिव्यामेव पञ्चानां दर्शनाच्च पार्थिवमेव ॥ १०४ ॥

इति। अनेन पूर्वोक्तस्यैतल्लिङ्गदर्शनादित्यस्य हेतोर्विरुद्धतां चोदयति। विपर्ययसाधनात् पञ्चानां लिङ्गदर्शनादित्युक्तेऽपि पञ्च गुणाः समस्ता यस्मिन् भूते दृश्यन्ते, तस्यैव भूतस्य तत्कार्यं शरीरमिति सिद्धमिति ॥ १०४ ॥

किञ्चान्यद् —

वृद्धिमत्त्वाच्च ॥ १०५ ॥

पार्थिवमेवेदं शरीरं, तत्कार्यस्य वृद्धेर्दर्शनाद्, वृद्धिरन्येषां भूतानां नास्तीति ॥ १०५ ॥

इदानीं लोकप्रत्यक्षतः साधयति पार्थिवत्वं शरीरस्य —

पृथिव्यवस्था(?ना)च्चेतरेषामपगमे ॥ १०६ ॥

इति। मरणकाले शेषाणि भूतानि चेष्टाजीवनौष्ण्यलक्षणानि + + + यन्ति + + + केवलं शरीरसङ्घातमात्रं पृथिव्यां शेत इति ॥१०६॥

एवमेभिर्हेतुभिः पार्थिवत्वे साधिते तेषां हेतूनां निषेधार्थमुच्यते —

यथा भूयस्त्वेन क्रिया सत्यपि पञ्चात्मकत्वे शरीरस्य ॥ १०७॥

इति। शरीरस्य पञ्चात्मकत्वे सत्यपि कथं क्रियाविरोधो न भवतीति। यथा भूयस्त्वेन क्रिया भवति। एतदुक्तं भवति— यद्यद्भूतं शरीरारम्भसमयेऽधिकं भवति, तत्तदात्मानं क्रियां निर्वर्तयन्नितराणि भूतान्यभिभूय ॥ १०७ ॥

गुणभूयस्त्वमवर्ण्यमवरोधात् पञ्चसु ॥ १०८ ॥

यद् गुणभूयस्त्वं पृथिव्यास्त्वया वर्णितं तदवर्ण्यमयुक्तमित्यर्थः। कुत इति। अवरोधात् पञ्चसु भूतेषु। अवरोधो नाम सर्वथा पञ्चानां गुणवत्त्वमेतेषां न व्यभिचरतीति। यथा पृथिव्या गन्धो व्युदस्तस्तदा शेषाश्चत्वारः पञ्चानां समाना एव, रसे व्युदस्ते शेषा इति। अथवा अवरोधादिति भूतानि परस्पराणि संपृक्तानीति गुणभूयस्त्वमिष्टं ह्यपरेणेति। एवं ह्यवरोधादेकभूतगुणपरिकल्पना न युक्तेति ॥ १०८ ॥

न सर्वेषामिति चेत, त उपलभ्यन्ते ॥ १०९ ॥

गन्धादयो गुणाः सर्वेषां न भवन्ति, पृथिव्या एवेति चेत, त उपलभ्यन्ते अन्येषु च। अप्सु शब्दस्पर्शरसरूपाणि उपलभ्यन्ते। एवं शेषेष्वपीति ॥ १०९ ॥

कुतो वृद्धिरितरैरनुगृहीतस्य, पृथिव्यवस्थानं न केवलम् ॥ ११० ॥

पृथिवीनिमित्तं वृद्धिः कुतो भवति, न भवतीत्यर्थः। कस्मादिति। इतरैर्भूतैरनुगृहीतस्य। यद्यापो न जीवयन्ति यदि वायुर्न जीवयतीत्यादिना पृथिव्यां मरणकाले केवलं पृथिव्यवस्थानं च न दृश्यत इत्यर्थः। मृतशरीरे आप्यं स्निग्धत्वं मार्दवं च विद्यते। वायव्यं चाङ्गविभागादि। (पाणि ?) नाभसानि च विद्यन्ते। वर्णविशेषश्चाग्नेयो विद्यत इति ॥ ११० ॥

इदानीमिन्द्रियाणां भौतिकत्वं साध्यते विशेषत इति।

आहङ्कारिकाणीन्द्रियाणीति मन्यन्ते वार्षगण्याः, औलूक्याः पुनर्भौतिकानि ॥ १११ ॥

इति। तत्पक्षपतिता वैद्या इत्युच्यते ॥ १११ ॥

भूयस्त्वाद् गन्धवत्त्वाच्च पार्थिवं गन्धविज्ञानम् ॥ ११२ ॥

इति। गन्धेन्द्रियं गन्धो ज्ञायतेऽनेनेति गन्धज्ञानं, करणत्वादिन्द्रियाणां, तद् घ्राणेन्द्रियं पार्थिवं, कथमिति। भूयस्त्वात्,

कस्मिन् कस्येति। घ्राणे पृथिव्याः। पृथिवी पुनराधिक्येन घ्राणेन्द्रिये वर्तते, गन्धवत्त्वाद् घ्राणेन्द्रियस्य। गन्धस्य ग्रहणादिति योऽर्थः। तुल्यजातीयेन भवितव्यं, तुल्यजातीयस्य ग्रहणाद्। अथवा गन्धवत्त्वाद् बाह्यायाः पृथिव्या इति। अत्र दर्शनात् तत्रापि तथैवेति। भूयस्त्व-मुत्कर्षापकर्षसन्निवेशविशेषः। तस्मात् सन्निवेशाद् द्रव्याणां वैषम्यं सादृश्याद् भवतीति। इदं तावत् किं पूर्वमेवोक्तेन स्थावराणामुत्प-त्तिक्रमेणैव सिद्धम्। ननु तथाप्यत्र विशेषः एकस्मिन्नपि द्रव्ये संस्थान-कृतो भेदो विद्यते, पनसफलादीनां तुल्यानामिति। केषाञ्चिदणुत्वं केषाञ्चिन्महत्त्वमित्यादि। तत्र तस्य कारणं भूतोत्कर्षापकर्षविशेषः यत्र पृथिवीपरमाणवः प्राभूत्येन वर्तन्ते तत्र महत्त्वमन्यत्राणुत्वमिति। अथवायमन्योऽर्थः—अवेक्षितव्यमन्यदित्युक्तम्। तस्य सामान्यतः कारण-निर्देशार्थमुक्तं भूतानामुत्कर्षापकर्षविशेषमाश्रित्यैव द्रव्यवैषम्यमपेक्षित-व्यमिति ॥ ११२ ॥

एवं द्रव्यवैषम्ये भूतैः क्रियमाणे किं तदाश्रितानां द्रव्याणां रसादीनां वैषम्यमस्तीत्याह —

रसगुणवीर्यविपाकाः प्रत्येकं च ॥ ११३ ॥

इति। रसाश्च गुणाश्च वीर्याणि च विपाकौ च प्रत्येकमेके-कश इति ॥ ११३ ॥

भूतानामुत्कर्षापकर्षसन्निवेशविशेषसमूहादेकस्माद् व्यवकीर्णाद्वा ॥ ११४ ॥

समूहादपकर्षवत् सन्निवेशविशेषादेकस्मा (द्) रसादयो जायन्ते अनेकस्माद्वा। व्यवकीर्णाद् वा। एकस्मादनेकस्माच्चोत्पत्तिर्व्यवकीर्णा-दिति। सन्निवेशविशेष एव समूहः सन्निवेशविशेषसमूहः। सर्वथा कार्यं द्रव्यमित्युक्तं भवति। तस्मात् समूहस्थाद् भूतादेकस्मादेव वा सर्वे सम्भवन्ति। यथा क्षीरे। क्षीरद्रव्यं तावद् भूतसमूहः। तथापि तत्रैकं भूतसमुदायाख्यमुत्कृष्टम्। तेनैव रसादयश्चोत्पादिताः। द्रवत्वादाप्यं, शुक्लो वर्ण आप्यः, रसश्चाप्यः, अन्यः पार्थिवाप्यो मधुरः। आप्यः स्निग्धो गुणः। वीर्यं शीतमाप्यम्। विपाकश्चापि गुरुराप्य इति। इदानीमनेकस्मात् तावत्—पिप्पली भूतसमूहः। तत्र रसादयो

वेकस्माद् भूतोत्कर्षाद् भवन्ति प्रत्येकम्। पार्थिवं द्रव्यं, रसः कटुकोऽग्निवायुभ्यामुत्पन्नः। पार्थिवाप्यो गुणः गौरवं शीतवीर्यम्। वायुजलाभ्यां विपाकः। पार्थिवाप्यो गुरुः। व्यवकीर्णाद् यथा—सर्पिषि सर्पिराप्यं द्रव्यम्। मधुरो रस आप्यः पार्थिवश्च। स्निग्धतागुणो ह्याप्यः। एकस्मादेव वीर्यं शीतमाप्यं वायव्यं च। विपाको लघुभिरुत्पादित इति। अस्य वाक्यस्यार्थमन्ये खल्वेवं वाञ्छन्ति—उत्कर्षापकर्षवत् सन्निवेशविशेषात् समूहाद् वा जायन्ते रसादयः। एकस्माद् वा व्यवकीर्णाद् वेति चतुर्धा। समूहाद् वेत्यत्र तावद् अगदद्रव्यं, तस्मिन् द्रव्ये सकलेन भूतसमूहेन युगपदेव रसगुणवीर्यविपाकाः समुत्पादिता इति। विशेषाः पूर्वोक्ता एव ॥ ११४ ॥

किमेवमुत्पन्ना रसादयस्त्वेकधा एव स्वकर्मकराः नेत्याह —

यदस्य बलवत् तेन कर्म ॥ ११५ ॥

इति। यदिति रसादिषु यदस्य कार्यस्य द्रव्यस्य बलवद् विशिष्टमन्यानभिभूय स्वात्मनः फलं ददाति, तेन करोतीति, तदेव खलु क्षीरं शैत्ये विद्यमानेऽपि न वायोः प्रकोपकं, माधुर्यस्नेहयोर्बलवत्वात् ॥ ११५ ॥

किमेतानि त्रिविधान्यपि द्रव्याणि प्रधानानि, नेत्याह —

यत्र स(र्व)मेकस्मात् समूहाच्च तत् प्रधानं द्रव्यम् ॥ ११६ ॥

यत्र यस्मिन् द्रव्ये सर्वं रसादि एकस्मादुत्पन्नं तत्प्रधानं समूहाच्चेति। एवं द्वितीयेऽर्थविशेषे क्षीरद्रव्यं प्रधानमगदश्च ॥ ११६ ॥

स्यात् प्रधानमितरन्नवा ॥ ११७ ॥

इतरत् स्यात् प्रधानं, नवा प्रधानमनेकस्माद्, यस्य सर्वं व्यवकीर्णाद् वा तत्प्रधानं च विद्यते अप्रधानं चेति। तत्र पिप्पल्यः प्रधानाः अनेकस्माद्वर्गे, हायनकस्त्वप्रधानः। तस्मादेकस्माद् रसादयः। यथा हायनकः पार्थिवः, तस्य रसो मधुरः, गौरवं गुणः, शीतं वीर्यं, गुरुर्विपाक इति। व्यवकीर्णेषु घृतं प्रधानं, कुलत्थोऽप्रधानः, तस्य रसः कषायः, उष्णो गुणः, वीर्यं च, गुरुर्विपाक इति ॥ ११७ ॥

एवं स्थावरगतः परीक्षितः। इदानीं जङ्गमेषु पुरुषः प्रधान इति तस्य शरीरगतं किञ्चिद् विचारयितुकाम आह —

शारीरेषु शरीरं व्याख्यातम् ॥ ११८ ॥

इति । शारीरेष्वध्यायेषु शास्त्रप्रसिद्धेषु शरीरं विशेषतो व्याख्यातं — गन्धवत्त्वादिति । हेतुद्वयमिदं घ्राणेन्द्रियस्य पार्थिवत्व-प्रसाधनार्थमुक्तम् । अन्यत्र पार्थिवत्वसाधनेऽदृष्टसामर्थ्यं कथं साध्यं साधयति । अत्र गन्धस्य ग्रहणं प्रत्यक्षत उपलब्धम् । तस्य गन्धज्ञानस्य तत्रैव घ्राणप्रदेशे प्रत्यक्षेणोपलब्धेरन्यत्रानुपलब्धेश्च । किं नियमकारण-मित्यत्रैवं भवितव्यमिति ग्रहणं गृहीत्वा साधयेत । अन्यत्रापि शरीरे प्रदेशे पार्थिवत्वे सत्यपि घ्राण एव कस्मात् पार्थिवो गन्ध उपलभ्यत इति । भूयस्त्वादित्युक्त(म)त्र भूयान् पृथिव्यंशो व्यवस्थित इति । तच्च भूयस्त्वं ( गन्धवत्त्वं ) गन्धवद् गन्धेन नित्ययुक्तं नित्ययोगे खल्वयं वति-प्रयोगः । उक्तं हि —

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥"

इति । नित्यसन्निहितत्वात् स्वजातीयं गृह्णाति । यद्येवं कस्मात् स्वात्मनो गन्धं न गृह्णातीति, इन्द्रियाण्यात्मनि वृत्तिविरोधात् स्वरूप-स्वभावलम्बनानि भवन्ति । अन्या सत्या वाति ॥ ११८ ॥

एवं शेषाण्यप्याह —

भूयस्त्वाद् रसरूपस्पर्शवत्त्वाच्चास्वाददर्शनस्पर्शनान्याप्य-तैजसवायव्यानि ॥ ११९ ॥

इति । भूयस्त्वाद् रसवत्त्वाच्चाप्यमास्वादनमिति । आस्वा-द्यतेऽनेनेत्यास्वादनम् । शेषं पूर्ववत् ॥ ११९ ॥

श्रोत्रमान्तरिक्षम् ॥ १२० ॥

श्रूयतेऽनेनेति श्रोत्रं, तदिन्द्रियमान्तरिक्षं, शब्दस्य भौतिक-त्वात् । पूर्वोक्तः परिकल्पो न शक्यते वक्तुम् । तथाप्याकाशगुणत्वाच्च शब्दस्यानुमीयते स्वयोनिग्रहणद्वारेणेति ॥ १२० ॥

वायव्यं केचित् ॥ १२१ ॥

केचिदाचार्याः श्रोत्रेन्द्रियं वायव्यं मन्यन्ते । त्वगिन्द्रियेणापि शब्दस्य ग्रहणं प्राप्नोति ॥ १२१ ॥

वायव्यत्वादित्यस्य संशयस्य व्युदासार्थमाह—

ते पुनः स्पर्शनं भूतसाम्यात् ॥ १२२ ॥

स्पर्शनमिन्द्रियं भूतसाम्येन निर्वर्तितमिति वाञ्छन्ति, ये वायव्यत्वं श्रोत्रेन्द्रियस्येच्छन्तीति ॥ १२२ ॥

एवं स्थावरजङ्गमात्मकस्य द्रव्यस्य विशेषजातं परीक्ष्येदानीं तेषामवयवजातं चिकित्साजातयोग्यं वक्तुकाम आह —

मूलसारस्कन्धत्वक्पत्रपुष्पफलमज्जाप्रवालफल्गुलिंशकपरिपोटककन्दास्थिवृन्तस्नेहक्षीरवेष्टकरसनिर्मोका वृक्षवीरुदोषधिवनस्पतिप्रभृतीनामवयवा धातुजतुलोहपाषाणमणिप्रभृतयश्च स्थावराणां, रसशोणितमांसमेदोऽस्थिमज्जाशुक्रक्षीरमूत्रपुरीषचर्मनखवसास्कन्धकपोलविषमदरोचनापित्तप्रभृतयो जङ्गमानां त उपयुज्यन्ते यथायोग्यम् ॥ १२३ ॥

इति। सारश्चन्दनादिः। मज्जा आरेवतफलम् आमज्जादि। फल्गु बाह्यं निस्सारम्। लिंशकम् अभ्यन्तरा त्वक्। परिपोटकः अर्जुनादीनां बाह्यत्वक्(फ ? पट)लम्। अस्थि फलानामभ्यन्तरसारः। पनसाम्रास्थ्यादि। वृन्तं पत्रादीनां बन्धनम्। वेष्टकं निर्यासः। निर्मोकः स्वयमेवार्थता। त्वक् क्रमुकादीनां छदनम्। धातु यत् स्थावराणां धातवोऽञ्जनहरितालादयः। एते पूर्वोक्ताः स्थावराणामवयवाः। रसः शोणितानां, जङ्गमानामवयवा इति। रसा रसावस्थानं शुक्लं च तत्स्थानमण्डानां कपालानि। मदो वारणानां, रोचना गवादीनां, प्रभृतिशब्देनान्त्रपुप्फुसादयश्चोक्ता भवन्ति। त उपयुज्यन्ते यथायोगं, ते अवयवा उभयात्मका यथायोगं, यथार्हं तत्र तत्र व्याधाविति उपयुज्यन्त इत्युपयोगार्थं प्रयुज्यन्त इत्यर्थः ॥ १२३ ॥

इति भदन्तनागार्जुनीय रसवैशेषिकस्य नारसिंहकृते भाष्ये

द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः ।

इदानीं रसस्य पूर्वं "परस्ताद् वक्ष्यन्ते रसाः" इति स्थापितस्यावसर इति ।

**रसगतो विचारः प्रस्तूयते ॥ १ ॥**

इति ॥ १ ॥

**मधुराम्ललवणकटुकतिक्तकषायाः षड्रसाः ॥ २ ॥**

इति । रसभेदान्ता + + + भेदत्वात् सामान्येन विवक्षिताः । सङ्ख्याग्रहणं स्थितपक्षत्वाद् *सङ्ख्यार्थं च ॥ २ ॥

**क्षारमेके सप्तमम् ॥ ३ ॥**

एके आचार्याः क्षारं सप्तमं रसं वाञ्छन्तीति । उक्तं हि—

"निष्पाव(काशं ? शाकं) च तथैव यस्यां
मुद्गस्य माषः स तथैव शाकम् ।
क्षारं कषायं मधुरं च नित्यं
प्रबद्धमूत्रं विपरीतवर्च ॥"

इति ॥ ३ ॥

**अव्यक्तमष्टममित्येके ॥ ४ ॥**

एके पुनराचार्या अष्टमं रसं वाञ्छन्ति अव्यक्तं नाम । उक्तं हि—

"अगन्धमव्यक्तरसं प्रसन्नं
यदन्यदम्भो घनजस्य तुल्यम् ।"

इति ॥ ४ ॥

अस्य पक्षद्वयार्थस्य प्रतिषेधार्थमाह —

**षट् सूत्रकारप्रामाण्यादास्वादाच्च ॥ ५ ॥**

इति । सूत्रकारप्रामाण्यादिति, षडेव रसा न सप्तमोऽस्तीति । आस्वादादिति प्रत्यक्षत उपलब्धेरिति । अस्वाद्यमानाः षडेवोपलभ्यन्ते, न सप्तमः । अनेनाव्यक्तश्चाप्रसिद्धः । अव्यक्तस्य ग्रहणाभावात् । अथाव्यक्तिर्नाम तेषामेव षण्णामपि विवेकाप्राप्तिः । क्षारो गुणः क्षारगुणशक्तिर्द्रव्यस्येति ॥ ५ ॥

---

* नियमार्थमित्यर्थः ।

एवं (र)सबहुत्वे प्रतिषिद्धेऽन्यथा तेषां प्रत्येकबहुत्वं प्रदर्शयन्नाह —

तत्रैकैकत्र प्रसक्तमनेकत्वम् ॥ ६ ॥

इति। तत्र तेषु रसेषु षट्सु एकत्र एकस्मिन् मधुरे अम्ले वा प्रसक्तमापन्नमनेकत्वमिति। एवं प्रसङ्गविधानाद् अनेनोत्तरेण भवितव्यम्। कथमिति। यदि भवतास्वादभेदात् षट्त्वं परिकल्पितं, स चास्वादभेदो नैकत्वं रसानां साधयति। कथमिति ॥ ६ ॥

तीव्रमन्दविशेषात् ॥ ७ ॥

तीव्रो मधुरो मन्दो मधुर इति भेदो भवति। तथाम्लादिष्वपि ॥ ७ ॥

किन्तु —

आस्वादविशेषाच्च ॥ ८ ॥

क्षीरशर्करामधुकादीनामास्वादभेदो दृष्टः तस्माद् बहवो मधुराः। यत्रास्वादभेदो दृष्टः, तत्र बहुत्वं दृष्टम्। यथा तत्र षट्सु। अत्राह— तीव्रमन्दत्वादिति सिद्धे आस्वादविशेषादिति न वक्तव्यमिति। उच्यते। तीव्रमन्दत्वमिति मधुरता। आस्वादविशेषः स्वादुतेति ॥ ८ ॥

किञ्चान्यत् —

संसर्गविशेषाद् द्रव्यविशेषाद् गुणविशेषात् वीर्यविशेषात् कर्मविशेषाद्विदाहविशेषादुपरसविशेषात् ॥ ९ ॥

अनेकत्वं प्रसक्तमिति योज्यं सर्वत्र हेतौ। संसर्गः अवयवद्रव्यप्रदेश इति। यथेक्षोः पर्वणि पर्वणि माधुर्यभेदः, संसर्गविशेषा(न ? द)यमन्य एव मधुरः। यद्येक एव मधुरः स्याच्छर्करायां क्षीरे च द्रव्यविशेषाद् विशेषः स्यादेवं न दृष्टम्। तस्माद् बहवो मधुरादयः। किञ्चान्यद् — द्रव्यविशेषाद् ।, शर्करेक्षुमृद्वीकादीनां विशेषात् भेदात् अनेकेमधुरा इति। कथमेभिर्जात्यन्तरभेदैर्जात्यन्तरस्य रसस्य भेदत्वं साध्यते। द्रव्यविशे( ष ? षात् ) तत्र द्रव्याणि भिन्नानि भवन्तु। किमिदानीं रसानां भेदस्य जातमिति। यद्येवं द्रव्यविशेषादिति आश्रयभेदस्तावदनेकरससाधनं न भवतीति अनेकाश्रयवृत्तिरूपमनेकाश्रयं दृष्टमिति। एकाश्रयेऽपि रसबहुत्वं दृश्यत इति चामलकादिषु द्रव्यविशेषादिति

द्रव्यविशेषाज्ञानात्यमित्युक्तं भवति । आस्वाद्यायमिक्षुरिति ज्ञायते । यद्येक एव मधुरः स्यात्, कथं द्रव्यविशेषग्रहणं भवति रसनिमित्तम् । तस्माद् द्रव्यविशेषाज्ज्ञानीमो मधुरस्य बहुत्वमिति । एवमम्लादिष्वपि । किञ्च गुणविशेषाद् मधुरतायां तुल्यायामपि क्षीरं गुरु यष्टिमधुकं लघ्विति विशेषाद् गुणविशेषादित्ययं हेतु सामान्यः । गृहीत्वेति हेतवः । तथैव वीर्यविशेषः — मधुरं क्षीरं स्रंसयति यष्टीमधुकं सन्दधाति कपित्थमम्लं सङ्ग्राहि आमलकं भेदीति । विपाकविशेषः — क्षीरं गुरुविपाकं घृतं लघुविपाकं माधुर्ये सत्यपीति । कर्मविशेषः — क्षीरमायुष्यं बृंहयति पुराणस्य घृतस्य कर्म लेखनमिति । विदाहविशेषः — मत्स्यमाधुर्यं विदहति न क्षीरमाधुर्यमिति । उपरसविशेषादिति कश्चिदुपरसवान्मधुरः कश्चिदनुपरसः । यथा कश्चित् कषायानुरसो मधुरः, तथा मधुरः कश्चित् कटुकानुरसः यथा पनसफले सहकारफले माधुर्यमम्लानुरसमिति । तस्मादेभिरेवं प्रत्येकं बहवो रसा इति ॥ ९ ॥

अत्रोत्तरमाह —

दृष्टमेभिर्विशेषणं न पुनः रसान्तरम् ॥ १० ॥

इति । एभिस्तीव्रमन्दत्वादिति । रसानामनेकत्वसाधनार्थमुक्तं विशेष(ण)मात्रं दृष्टम् । पुनःशब्दोऽवधारणार्थः । नास्त्येवेति । कस्मात् । रसान्तरं न दृष्टमिति । स्वयमेव वक्ष्यति हि "तीव्रमन्दत्वाद्यो सत्येकत्वमवियोगादि" ति । तत्रैवार्थविभागः क्रियते । अत्र विशेषणत्वं प्रतिपादयामः । विशेषणविशेष्यत्वं सामान्यविशेष्यत्वं चेत्युभयं भिन्नम् । सर्वं सर्वस्य विशेषणं च भवति विशेष्यं च विवक्षापेक्षया । गौरानीयतामित्युक्ते किं कृष्णा शुक्ला कपिलेति स्थिते विशेषणमास्थीयते कृष्णेति । विशेषणस्य हि विषयः सति सम्भवे व्यभिचारे च । विशेषणमिति यत्र सम्भवव्यभिचारौ, तत्र भवत्येव । कृष्णा (शुक्ला कपिला)दिषु स्वभेदेषु गोत्वं सम्भवति । न च कृष्णत्वमश्वादिषु व्यभिचरतीति । तथा कदाचिद् विशेषणमपि विवक्षया विशेष्यतामुपयाति कृष्णामानीयतामित्युक्ते न ज्ञायते युवतिनिशाञ्जनभ्रमरनि(ल)कम्बलादिषु बुद्धेः परिस्पन्दनहेतुत्वात् । ततः कृष्णा गौरिति विशेष्यते । आह विशेष्यं स्यादनिर्ज्ञातोऽर्थो विशेषणं परार्थत्वे विशेषणत्वं सर्वेषामुपकारिणामिति । अत्रापि मधुर मानीयतामित्युक्ते न ज्ञायते किं तीव्रो मन्दो वा विदाही वा न विदाहीति

द्रव्यविशिष्टे गुरुविपाके लघुविपाक इत्यादि। ततो विशेषणमाकाङ्क्षते। तत्र तीव्रो मधुर आनीयतामिति तीव्रत्वेन विशेष्यते। एवं विशेषेऽपि। तथा तीव्र इत्युक्ते किं रसः शब्द इति न ज्ञायते। रसेऽप्यपि किं मधुर अम्ल इति। तत्र विशेष्यते तीव्रो मधुर इति। यद्येवं षडपि न रसस्य भेदाः स्युर्विशेषणत्वात्। कथं रस इत्युक्ते किं मधुरोऽम्ल इति बुद्धेः परिप्लवो भवति। तद्व्युदासार्थं मधुरो रस अम्ल इति विशेष्यत इति विवक्षायां भवतीति पूर्वमुक्तं ननु। किन्तु सामान्यविशेषणविशेष्यभावो गुणद्रव्ययोर्विशेषणविशेष्यभावश्च न तुल्यः। गुणस्तु सर्वत्र सर्वेषां विशेषणभावेन व्यवतिष्ठते। विशेषास्तु स्वसामान्यावच्छेदाद् भेदात् परस्परं विशेषयन्ति। मधुरादयो हि रससामान्यस्यैव विशेषास्तद्भेदास्तान्यत्र विशेषणभावं प्रतिपद्यन्ते। तीव्रत्वादयो रसानां शब्दानां च विशेषणत्वायोपतिष्ठन्ते। तथापि भेदकं सर्वत्र विशेषणसंज्ञां लभते, विशेष्यं तु सामान्यसंज्ञामिति। आह च—

"सामान्यं तत् तदा ज्ञेयं यद्यदस्य विभित्सितम्।
भेदकस्तु यदा यो (यो) विशेषः स स जायते॥"

इति सामान्यविशेषधर्मतां तीव्रमन्दत्वादावित्यस्मिन्न वाक्ये व्याख्यास्यामः॥ १०॥

एवं रसानां बहुत्वे प्रतिषिद्धे सर्वेषामेकत्वमन्यथा प्रसञ्जयन्नाह—

रसत्वसामान्यादेकत्वमेव न षट्त्वम्॥ ११॥

इति। रसत्वमिति सामान्यं मधुरादीनां विद्यते तस्माद् भेदो नास्त्येक एव रस इति। अस्याभिप्रायः—शब्दभेदस्याभावान्मधुरादीनां तीव्रमन्दत्वादिषु विद्यमानेष्वपि भेदो नास्तीति तीव्रो मधुरो मन्दो मधुर इति। एवं शब्दाभेदमात्रेणैकत्वं कल्प्यते। अत्राप्येकत्वं स्यान्मधुरो रस अम्लो रस इति सामान्यादित्येवमनुमानेनैकत्वे साधिते प्रत्यक्षविरोधं दर्शयित्वा साधयति—॥ ११॥

गुणत्वसामान्ये सत्यपि गुणभेदवद् रसभेदः॥१२॥

शब्दस्पर्शरूपरसगन्धादिभिर्भिन्ना दृश्यन्ते। अत्रापि सर्वत्र गुणशब्दो विद्यत इति। अत्रानेकत्वमेषां प्रत्यक्षसिद्धम्। ॥ १२॥

भिन्नेन्द्रियग्राह्यत्वात् ॥ १३ ॥

भिन्नेन्द्रियत्वमिति प्रत्यक्षविरोधः। कश्चेतयानो ब्रूयादिति ॥१३॥

इदानीं हेतुत्वषट्त्वं प्रकाशयन्नाह—

कारणभेदात् ॥ १४ ॥

इति। षण्णां रसानां प्रत्येकं कारणभेदोऽभिहितः। तत्र पृथिव्या बाहुल्यान्मधुरं विद्यादित्यादि। तस्मात् कारणभेदात् षडेव रसा इति। यत्र कारणभेदस्तत्रान्यत्वं दृष्टं, खदिरपलाशादिषु कार्य-भेदात्। कार्यं फलं, फलभेदादन्यत्वं दृष्टं पुण्यपापयोः आस्वाद-भेदादयं हेतुर्न वक्तव्यः। षट्त्वं च सूत्रकारप्रामाण्यादास्वादाच्चेति सिद्धत्वादिति। अत्र एकवचनात् पूर्वं एवास्वादभेदो विद्यते। षड्धा इत्यनु (षा? वा) दोऽयं प्रदर्शितः विदाहभेदादेकत्वं नास्तीति। उक्तं हि—

"कट्वम्ललवणा ये येर्विदाहिन इति स्मृताः।
स्वादुतिक्तकषायाः स्युर्विदाहरहिता रसाः" ॥ १४ ॥

मूर्छनभेदात् ॥ १५ ॥

मूर्छनकृतो भेदस्तेषु रसेषु दृष्टः केचिन्मूर्छां जनयन्ति केचिन्न जनयन्तीति तस्माद् भिन्नाः। उक्तं हि—

"विदाहिनो रसा मूर्छां जनयन्तीति निश्चिताः।
अविदाहिनस्त्वच्छमनाः कीर्तिता भिषगुत्तमैः ॥"

इति ॥ १५ ॥

परिणामभेदात् ॥ १६ ॥

परिणामो विपाकः विपाकभेदो दृष्टः। तद्यथा— कटुकतिक्त-कषाया लघुविपाकाः मधुराम्ललवणा गुरुविपाका इति। तस्माद् विपाक-भेदाज्जानीमो रसभेदोऽस्तीति ॥ १६ ॥

लिङ्गभेदाच्च ॥ १७ ॥

षट्त्वं भवतीति। लिङ्गं लक्षणं लीनमर्थं गमयतीति। लिङ्गभेदादन्यत्वं दृष्टम् अश्वमहिषयोरिति। कार्यास्वादविदाहपरिणाम-

लिङ्गभेदात् पूर्वं रसबहुत्वसाधनार्थमुक्तास्तत्र विशेषणमात्रहेतवो भवन्ति न भेदहेतव इति प्रतिषिद्धाः, कथमत्रैव भेदहेतवो भवन्तीति । तत्र भेदस्य सद्भावात्र हेतवो भवन्ति, शब्दभेदस्य च सामान्यस्याभावादिति । अथापि तेषां तत्र साधकत्वं स्वयमेव चदर्शितं हि, यथाऽस्यादिविशेषो द्रव्यविशेषश्चेत्यादिनेति ॥ १७ ॥

असमाना(? नां) लिङ्गभेदप्रदर्शनार्थमाह —

लिङ्गं पुनर्मधुरस्य ह्लादनं श्लेष्मजननं कण्ठतर्पणं च । हृद्यत्वं दन्तहर्षः प्रस्रावणं प्रक्लेदनं चाम्लस्य । लवणस्य विसरणमुष्णत्वं प्रसेचनं च । कटोर्जिह्वाघ्राणबाध उद्वेगो नासास्रावः शिरोग्रहश्च । तिक्तस्य हर्षणं च हरिमता शैत्यम् आस्यस्य गलद्वारशोषणं च । कषायस्य मुखपरिशोषः श्लेष्मसंवृत्तिर्गौरवं स्तम्भश्च ॥ १८ ॥

लिङ्गं पुनर्वक्ष्यते । पुनःशब्दो वाक्यालङ्कारार्थः । मधुरस्य लिङ्गमित्यर्थः । ह्लादनं हर्षणं प्रीणनमिति श्लेष्मजननं चेति कण्ठे । एतेनास्वादकाल एवोपलभ्यानीमानि लिङ्गानि (न) फलकाल इत्युक्तं भवति । मुखस्थानामेतानि हि रसानां लिङ्गानि, आस्वादस्य प्रत्यक्षागोचरस्य वस्तुमशक्यत्वात् । कण्ठतर्पणं कण्ठस्य पूरणभावं जनयति । हृद्यत्वमम्लस्य मुखस्थस्य । लिङ्गानि भवन्ति । हृद्यत्वं हृदयप्रीणनत्वम् । दन्तहर्षः दन्तानां वा भक्षणेऽसामर्थ्यं, प्रस्रावणमास्यस्य प्रभूतोदकत्वं, प्रक्लेदः शुष्कगलकण्ठस्यापि । अथवा प्रस्रावणमन्यस्याम्लभक्षणं दृष्ट्वा लक्षणत्वम् । लवणस्य लिङ्गानि विसरणं सर्वास्यव्याप्तिरिति, उष्णत्वमास्ये, प्रसेचनं मुखस्यास्रावप्रायत्वं, चशब्दः समुच्चयार्थः । कटोर्जिह्वादाहाश्च कटोर्लिङ्गानि । जिह्वाघ्राणबाधो जिह्वाग्रस्योपाभावः । उद्वेगः प्रतिकूलता । नासास्रावः नासाया उदकास्रावः । तक्षण्याच्छिरोग्रहः शिरोरुजा । तिक्तस्य हर्षणं च तिक्तस्य लिङ्गानि हरिमता हरिमगन्धता गलग्रन्थिमाश्रित्य । शैत्यमास्यस्य गलद्वारस्य शोषं कण्ठबिलस्येत्यर्थः । मुखपरिशोषः कषायस्य लिङ्गानि । मुखस्य परिशोषः समन्ताच्छुष्कता । श्लेष्मसंवृत्तिः श्लेष्मणः संवृत्तिः घनता ।

गौरवं मुखस्य । स्तम्भो जिह्वायाः सुखपरिस्पन्दनाभावः एवं षण्णां लिङ्गान्युक्तानि, पटुत्वं च ॥ १८ ॥

इदानीं पूर्वोक्तानां तीव्रमन्दत्वादीनामहेतुत्वप्रसाधनार्थोऽयमारम्भ इति ।

तीव्रमन्दत्वादौ सत्येकत्वमवियोगात् ॥ १९ ॥

तीव्रमन्दत्वादीनामस्तित्वेऽपि मधुरादीनामेकत्वं भेदाभावः अवियोगात् । कस्येति । मधुरादिशब्दस्य । तीव्रो मधुरः मृष्टो मधुरः अस्वादुर्मधुरः विदाही मधुर इत्यादौ सर्वत्र मधुरशब्दस्यावियोगात् तीव्रादिभिर्न किञ्चिद् भेदान्तरं कृतमिति जानीमः । यदि भेदान्तरं स्याच्छब्दभेदेन भवितव्यम् । यथा मधुरः कटुक इत्यादि । यदि तीव्रादयः स्वयं मधुरादिभेदाः स्युः, तीव्रः शब्दस्तीव्रो वर्ण इति न युज्यते वक्तुम्, अन्यजातीयस्य भेदोऽन्यसामान्यस्य भेदत्वं नोपयातीति । न ह्यश्वभेदे कर्कशशोणादिर्हस्तिनां भेद इति ॥ २० ॥

इतरेतरप्राधान्यात् ॥ २० ॥

अयं चापरो हेतुः प्रतिरूपक उत्तरविशेषः । इतरेतरप्राधान्याच्च मधुरादीनामेकत्वमिति योज्यम् । परस्परप्राधान्यमात्रं स्ववर्गीयस्य कुर्वन्तीति प्रादयः अस्मान्धुरद्रव्यादिदं तीव्रमिदं मन्दमिति । एवमम्लादिष्वपि मधुरस्याम्लस्य च ॥ २० ॥

तथान्येषां च प्रत्येकं भेदाभावसाधनार्थं हेतुरुपदिश्यते —

लोकोपचारात् ॥ २१ ॥

इति । लोकः प्राकृतजनस्तेनाप्यविशेषेणोपचर्यन्ते मधुरादयः— इक्षवो मधुराः क्षीरं मधुरं चिञ्चाफलमाम्लमिति । यत्र भेदस्तत्र लोकोऽपि भेदरूपेण व्यवहरति मरिचः कटुकः सैन्धवं लवणमिति ॥ २१ ॥

अत्र च —

प्रतिनिधिकरणात् ॥ २२ ॥

यदाऽसौ प्रयोक्ता रसानामलाभे प्रतिनिधिमाह तत्र विशेष्येव मधुरादीनां मधुराभावेऽन्यन्माधुर्यविशिष्टमाहरेति ॥ २२ ॥

किञ्च —

अविशेष्योपदेशात् ॥ २३ ॥

सामान्येनैव शास्त्रे उपदिश्यन्ते मधुराम्ललवणा वातघ्ना इति। कथमनेन भेदो नास्तीत्यवगम्यते। यदि सामान्यवाचकाः स्युर्मधुराम्ललवणाः शब्दास्तदा तद्भेदाद् (विद्यन्त? भिद्यन्त) इति। यथा रसमूलो ह्याहार इत्युक्ते षण्णां भेदानां ग्रहणं भवति। द्रव्यारम्भकाणि भूतानीत्युक्ते द्रव्यभेदस्य ग्रहणमिति, न पूर्वमेतेषां भेदाभावः सिद्ध इति। यदि सिद्धानेन वाक्यान्तरेण एकस्मिन् कर्मण्यविशेष्योपदेशादित्युक्तं भवति। यद्येवं तुल्यफलानां वातघ्नानां त्रयाणां परस्परभेदो दृष्ट इति तुल्यफलान मत्र फलनिमित्तं भेदो नावधारितः, स्वलक्षणतो भेदोऽवधारित इति। अत्र प्रसिद्धस्यैवागमतः स्थिरीकरणार्थमुक्तमिति न दोषः ॥ २३ ॥

तीव्रमन्दत्वादीनां सम्भवे परिज्ञाते तेषां हेतुत्वमहेतुत्वं चानेकत्वस्य ज्ञायत इति तत्कारणविवक्षुर्णवमुक्तं —

तीव्रमन्दत्वमुत्कर्षापकर्षाद्विशेषात् कारणस्य ॥ २४ ॥

इति। कारणस्य रसभेदकारणस्य उत्कर्षविशेषादपकर्षविशेषाच्च तीव्रत्वं मन्दत्वं च भवति, न रसभेदादुभयोरेककारणत्वादित्यर्थः। मधुरकारणस्य पृथिव्यम्बुबहुलस्योत्कर्षात् तीव्रो भवति मधुरस्तस्यापकर्षान्मन्दो भवति ॥ २४ ॥

तथास्वादविशेषाद् द्रव्यविशेषश्च ॥ २५ ॥

तथेति कारणस्योद्भूतिमपकर्षं चातिदिशति। द्रव्यविशेष इति द्रव्यसंसर्गविशेष इत्युक्तं भवति ॥ २५ ॥

द्रव्यगुणवीर्यविपाककर्मभेदात् कारणभेदात् प्रत्येकशः ॥ २६ ॥

एते द्रव्यभेदादयो हेतवः पूर्वोक्ता न रसस्य स्वस्य कारणस्य विशेषादाधिक्याद् भवन्तीति। तद्यथा एको मधुरः शीतवीर्यो भवतीति। तत्र तस्मिन् द्रव्ये शीतवीर्यारम्भकस्य भूतस्याधिक्याद् भवतीति। उभयमुतरन्न तद् वीर्यं कथं रसभेदस्य कारणं, भवति, भिन्नाधिकरणत्वात्। तस्मादेते हेतवोऽसिद्धा इति ॥ २६ ॥

विदाहाविदाहौ गुणेभ्यो द्रव्यविशेषादुपरसविशेषान्नचासौ रसस्य ॥ २७ ॥

न रसनिमित्तं, तस्मान्न मधुरादिभेदहेतुः । गुरुगुणनिमित्तं लघुगुणनिमित्तं चेति द्रव्यस्य विशेषा (?त) रसस्य द्रव्यविशेषादिति, द्रव्यस्वभावस्तु सर्वाणि द्रव्याणि उपरसयन्ति, कानिचिदिति । उपरसविशेषः उपरस एव विशेष इति । तन्त्रास्तौ रसस्य, द्रव्यस्यैवेत्यभिप्रायः । गुणानां गुणवत्त्वं पूर्वं प्रतिषिद्धमिति । स चापि रसभेदस्य कारणं न भवति, भिन्नाधारत्वादिति ॥ २७ ॥

तत्र कारणभेदो यथास्वम् ॥ २८ ॥

तत्र तस्मिन्नुपरसविशेषे कारणभेदो मूलकस्य च यथास्वं यथास्वं कारणं भवति, तथा तथा भवति । यथा मधुनि मूलको मधुरोऽप्यपार्थिवः, कषायस्तूपरसः पार्थिववायव्य इति, यथास्वं कारणैरेव भेदो भवतीत्युक्तं भवति ॥ २८ ॥

एवं षट्त्वं प्रसाध्येदानीं रसानामन्यथात्वगमनं वक्ष्यते—

अन्यथात्वगमनं स्थानात् ॥ २९ ॥

अन्यथात्वगमनं नाम अन्यास्वादस्य प्राप्तिः अन्यथात्वगमनं वक्ष्यत इति । स्थानाच्च भवति । स्थानं नाम क्वचिद् व्यवस्थानम् । यथा मधुरो रसतः ओदनादवस्थापितो धान्याम्लं भवति । अथवा स्थानात् स्थीयतेऽत्रेति स्थानमधिकरणं भाजनं, तद्धेतोरपि रसान्तरत्वं भवति । यथा आम्लभाजने प्रक्षिप्तं क्षीरं मधुराम्लमापद्यते ॥ २९ ॥

संयोगतोऽग्नेः पाकात् ॥ ३० ॥

संयोगतश्च नामान्यथात्वं भवति । संयोग इति द्रव्यसंयोगः । यथा सुधाचूर्णेन भस्मना वा संयुक्तं चिञ्चाफलमाम्लं मधुरं भवति । अग्नेः अग्निनिमित्तमिति । पाकादित्युक्तं भवति । तदेव चिञ्चाफलमग्निपक्वं मधुरं भवति, पाकाज्जाम्बवान्यार्द्राणि वायुना शोषितान्याम्लानि मधुरीभवन्ति ॥ ३० ॥

आतपात् ॥ ३१ ॥

तुम्बुरुफलान्यातपपरिशोषितानि कषायाणि मधुरीभवन्ति ॥ ३१ ॥

भाव (न) या देशकालाभ्याम् ॥ ३२ ॥

यष्टिमधुभाविताास्तिलाः कषायतिक्तमधुराः सन्तो मधुरा एव

भवन्ति। संयोगभाजनयोर्महान् विशेष इति न विप्रपञ्च्यते। देशकालाभ्यां, देशतः, क्वचिद् देशे आमलकफलानि परममधुरतराणि भवन्ति किल। कालतः, कदलीफलं कषायं, मधुरतामापद्यते, तदेवान्यरसं भवतीति ॥ ३२ ॥

परिणामतः ॥ ३३ ॥

परिणामोऽन्यथाभावः। यथा क्षीरं दधिभावेन परिणतमाम्लं भवति, तथासवाश्च। अथवा परिणामतः कालव्यतिक्रमादतिपरिणामतः। यथा मधुरं पनसफलमतिक्लिन्नं कालात्ययात् परिणताम्लं भवति, तथा तालफलं च। उपसर्गतः — क्रिमिप्रभृतिभिरुपसृष्टास्तिक्षवस्तिक्ता वा आम्ला वा भवन्ति। विक्रियातश्चान्यथात्वगमनं भवतीति। विरुद्धा वा विप्रतिषिद्धा वा क्रिया विक्रिया। तद्धेतोश्च रसान्तरप्राप्तिर्भवति। तद्यथा—तालफलं दग्धं भूमौ बहुशः परिवर्तितं तिक्तं भवति। पनसफलं हस्तेन बहुशः परिपीडितं क्लिष्टं चाम्लं भवतीति ॥ ३३ ॥

इदानीं रसानां कर्मोच्यते —

तत्र बृंहणीयास्तर्पणीयाः बल्या वृष्याः स्वादवो गुरुविपाका मेदुराः स्थिराः पयस्या हृद्याः स्निग्धा जीवनीयाः सृष्टमूत्रपुरीषाः पूजिताश्चाभ्यवहरणाय पूर्वे ॥ ३४ ॥

इति। तत्र तेषु पूर्वोद्दिष्टेषु षट्सु पूर्वे इति योज्यम्। बृंहणीयाः हि बृंहणे हिता योग्या वा। तर्पणीयाः प्रीणनशीलाः। बल्या बले हिता बलकराः। वृष्या वृषत्वे हिताः। स्वादवः मृष्टाः। गुरुविपाकाश्चिरपाकिनः। मेदुरा मेदोवर्धनाः। स्थिराः, स्थैर्यकराः अभेदोपचारात्। अथवा स्थिरकारणात् स्थिराः अन्नं प्राणा इति। पयस्याः स्तन्यवर्धनाः। हृद्याः प्रार्थनीयाः। स्निग्धाः, जीवनीयाः प्राणस्थितिहेतवः। सृष्टमूत्रपुरीषा सुखसृष्टमला इति। अभ्यवहरणाय आहाराङ्गत्वाय पूजिताः पथ्याः। आम्लमूर्तिर्मधुरमूर्तिरिति द्विविध एवाहार इति ॥ ३४ ॥

भूयिष्ठमितरे विपरीताः ॥ ३५ ॥

इतरे कटुकतिक्तकषायाः । भूयिष्ठं प्रायशस्तेष्वपि प्रधाना विद्यन्त इति ॥ ३५ ॥

इदानीं रसानां वर्धनक्षपणरक्षणेषु स्वकर्मसु कथं प्रवृत्तिरित्यत्राह —

ते यतो येन यस्मिन् यच्च कुर्वन्ति ॥ ३६ ॥

ते गुणाः वीर्यमधिकरणं कर्म चेति । ते रसा यतः कुर्वन्ति येन कुर्वन्ति यस्मिंस्थित्वा कुर्वन्ति यत् कुर्वन्तीति स्थिते यदिति गुणा गुण निमित्तं कुर्वन्ति, येनेति वीर्येण करणभूतेन कुर्वन्ति, यस्मिन्निति द्रव्येऽवस्थिताः कुर्वन्ति, यत् कुर्वन्ति तत् कर्मेति । देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीति कर्तृकरणाधिकरणकर्मसंज्ञितानि साधनानि चत्वारि पचिक्रियायाम् । एवमत्रापि 'मधुरः श्लेष्माणं वर्धयतीति (मधुरो रसः ?) मधुरो रसः कर्ता । करणं वीर्यमधिकरणं द्रव्यं, कर्मसंज्ञितः श्लेष्मा । एवं चतुष्टयसन्निपाते वर्धनक्षपणक्रिया सिद्धा भवति । एवं सिद्धायामत्र गुणग्रहणं व्यतिरिच्यते यतः कुर्वन्ति ते गुणा इति । यदि गुणाः करणभूताः, वीर्यं व्यतिरिच्यते । गुण-निमित्तं कुर्वन्ति रसा इत्युक्तं भवतीति न दोषः । रसानां कर्तृत्वं हीयत इति चेन्न । समुदायक्रियापेक्षत्वात् कर्तृतायाः । अथापि यथा विवक्षितं, तथा साधनानि भवन्तीति । असिश्छिनत्तीत्युक्ते (न ?)नासिश्छिनत्ति, असेस्तीक्ष्णता छिनत्ति हि । इहापि मधुरः श्लेष्माणं वर्धयतीत्युक्ते मधुरैकाधिकरणैः शैत्यगौरवशैथिल्यस्नेहैर्वर्धयति मधुरः । तस्माद् गुणसहितानां रसानां कर्तृत्वमविरुद्धमिति । आह चात्र निमिः —

"सर्वं द्वन्द्वमयं द्रव्यं जानीयात् पाञ्चभौतिकम् ।
अन्योन्यह्रासवृद्धित्वाद् गुणवैषम्यकारणम् ॥
अन्योन्यव्यतिषक्ताश्च भूतेष्वपि रसास्तु षट् ।
विज्ञाय रसतत्त्वं तु द्रव्यैः कार्यमुपक्रमेत् ॥
गुणाधिक्याद् रसास्तत्र विज्ञेया द्रव्यमाश्रिताः ।
गुणाभिव्यञ्जकं द्रव्यं व्यक्तिश्चास्वादलक्षणा ॥
द्रव्याद् रसो गुणात् पाकः पाकाद् वीर्यं प्रवर्तते ।
सर्वस्याभ्यवहार्यस्य ह्रासवृद्धिकरं नृणाम् ॥"

इति । उरभ्रश्चाह —

"दोषाशये पच्यमाना रसास्तद्दोषघातकान् ।
गुणान् सृजन्ति हन्युस्तं यद्यन्यान् भावयन्ति च ॥"

इति ॥ ३६ ॥

यत् कुर्वन्ति तत् कर्मेत्युक्तस्य कर्मणः फलपाचकत्वप्रदर्शनार्थमाह —

यन्निष्पादयति तत् फलम् ॥ ३७ ॥

यन्निष्पादयति साधयति तत् फलं, क्षयो वा वृद्धिर्वास्वास्थ्यं वेति ॥ ३७ ॥

तत्र कारणभेदात् पडेवेत्युक्तत्वाद् रसानां कारणमभिधीयते —

तत्र पृथिव्यपां बाहुल्यान्मधुरं विद्यात् ॥ ३८ ॥

बाहुल्यं च पञ्चात्मकत्वे सत्यपीत्यर्थः । पृथिव्यब्विशिष्टो मधुर इति ज्ञेयम् ॥ ३८ ॥

आम्लमपामग्नेश्च ॥ ३९ ॥

बाहुल्यादिति ॥ ३९ ॥

लवणमग्नेरपां च ॥ ४० ॥

बाहुल्याद् विद्यादिति उभयोर्विशेषप्रदर्शनार्थमग्नेर्लवणकारणत्वे पूर्ववचनं लवणेऽग्निरधिकः । आम्ले त्वाप अधिका इति । तस्मादौष्ण्येऽम्लाल्लवणोऽधिकः (आहः ?)

आह च —

"रौक्ष्यात् कषायो रूक्षाणामुत्तमो मध्यमः कटुः ।
तिक्तोऽपरस्तथोष्णानामुष्णत्वाल्लवणः परः ॥
मध्यमोऽम्लः कटुश्चान्ते स्निग्धानां मधुरः परः ।
मध्योऽम्ले लवणश्चान्ते रसस्नेहेऽतिरिच्यते ॥"

इति ॥ ४० ॥

कटुकमग्नेर्वायोश्च ॥ ४१ ॥

बाहुल्यात् ॥ ४१ ॥

तिक्तं खस्य वायोश्च ॥ ४२ ॥

कषायमवनेर्वायोश्च ॥ ४३ ॥

इति ॥ ४२, ४३ ॥

एवंभूतैरेते रसा निर्वर्त्तिता इति कथं निर्धार्यत इत्याह —

ते निर्धार्यन्तेऽनुमानात् ॥ ४४ ॥

आगमेन पूर्वमुपलब्धानां प्रमाणान्तरेण दृढीकरणार्थमयमारम्भः । आप्तवचनस्य त्रैविध्यात् । श्रद्धेया(र्थ)मनुमेयार्थं प्रत्यक्षार्थं चेति । श्रद्धेयार्थमुत्तराः कुरवः स्वर्गेऽप्सरस इति । अनुमेयार्थं प्रत्यक्षार्थं च यथा चक्षुरिन्द्रियं रूपस्य ग्राहकमिति । चक्षुपि सति न भवति । तस्मादस्ति चक्षुरिन्द्रियमित्यनुमीयते । प्रत्यक्षत एव रूपमुपलभ्यत इति । इहाप्ययमागमोऽनुमेयार्थः ॥ ४४ ॥

कथमिति ।

वर्धनात् समानजातीयस्यासमानजातीयस्य क्षपणाच्च ॥ ४५ ॥

निर्धार्यन्तेऽनुमानादिति । आप्यस्य श्लेष्मणो वर्धनादाग्नेयस्य पित्तस्य क्षपणाद् मधुरस्याप्यत्वमुपपन्नमित्यनुमीयते । एवं शेषाणामपि । अनेनैवाम्ललवणयोराग्नेयत्वाच्छ्लेष्मणः प्रतिपक्षत्वं कस्मान्न भवतीति । अयं कुचोद्यप्रकारश्च परिहृतो भवति । न ह्यायुर्वेदे प्रत्यक्षार्थानुमेयार्थाभ्यामागमाभ्यामन्यच्छ्रद्धेयार्थत्वमस्ति, दृष्टफलत्वादिति ॥४५॥

रसानां कारणभेदमेवमनुमानेन प्रसाध्य तत्रानुपपत्तिं चोदयति —

रसानामाप्यपार्थिवत्वाच्छेषभूतहेतुत्वमयुक्तम् ॥ ४६ ॥

इति । रसानां शेषभूतहेतुत्वमयुक्तमिति योज्यम् । अन्यथा ह्यप्राप्तभेदस्याप्यपार्थिवत्वमिति न युज्यते, आप्यपार्थिवत्वाद् रसस्येति । अयमत्राभिप्रायः — कारणानुरूपेण कार्येण भवितव्यम् । न हि कारणमात्मन्यविद्यमानं शक्तिविशेषं स्वकार्यं उपपादयतीति । अग्निवाय्वाकाशास्तु रसरहितास्ते कथं रसभेदानुत्पादयन्तीति ॥ ४६ ॥

कारणभेदाद् भवतीत्याह —

प्रत्ययत्वाददोषः पृथिव्याप एव हि हेतुः ॥ ४७ ॥

इति । द्विविधं हि कारणं प्रत्ययो हेतुरिति । हेतुस्तस्य कार्यस्य निर्वर्तकः । प्रत्ययस्तूपकारमात्रं करोति । तत्र हेतुसादृश्यमेव कार्यद्रव्यस्य न प्रत्ययसादृश्यम् । यथा पटस्य तन्तवो हि निर्वर्तकत्वाद्धेतुरित्युच्यन्ते । शङ्कुशलाकारज्जुसूत्रतुरीवेणुनालीतन्तुवायप्रयत्नादयः प्रत्ययाः । तत्र तन्तुसादृश्यमेव पटस्य (न) शङ्कुशलाकादिसादृश्यमिति । कस्मादत्र काटुक्ये तैक्ष्ण्यौष्ण्यमाग्नेयमुपलभ्यते प्रत्ययसादृश्यमिति ।

न तद् रसस्य, निर्गुणत्वाद् गुणानामिति पूर्वमेव विलुठितोऽयं पक्षः। यद्येवं, ते यतो येनेत्यत्र गुणनिमित्तं कर्म कुर्वन्तीति विरुध्यते, द्रव्याधिष्ठानैर्गुणैर्द्रव्यमेव कर्म करोतीति। तत्तु गुणसहित-द्रव्याधिष्ठानास्ते ते रसास्तत्तत् कर्म कुर्वन्तीत्युक्तं भवति। आह—

"ये रसा वातशमना भवन्ति यदि तेषु वै।
रौक्ष्यलाघवशैत्यानि न ते तत्कर्मकारिणः॥"

इत्यादि॥ ४७॥

तत्र हेतुर्निर्वर्तक उपकारकः प्रत्ययः॥ ४८॥

इति। एतद् वाक्यमनेनैव विन्यासेन कृतार्थमिति न वर्ण्यते॥ ४८॥

रससहितरसारम्भकत्वं न युक्तमित्यस्यानेनाचार्यमतेनापि परिहारं प्रदर्शयन्नाह—

द्रव्यारम्भकाणि भूतानि रसारम्भकं द्रव्यम्॥ ४९॥

इति। पृथिव्यादीनि भूतानि द्रव्याणां स्थावरजङ्गमारंभकाणि। तानि द्रव्याणि पुरस्ताद् रसारम्भकाणीति॥ ४९॥

तदयुक्तमिव मन्यमानः प्रतिषेधार्थमाह—

न यन्मयं द्रव्यमतन्मयत्वाद् रसस्य॥ ५०॥

नेति प्रतिषेधार्थं रसारम्भकाणि द्रव्याणीत्युक्तस्य। एवं यदि भवेत् पार्थिवेन द्रव्येणारब्धेन रसेनापि पार्थिवेन भवितव्यम्। एवं न भवति। अतन्मयत्वात्, रसस्य। न तन्मयोऽतन्मयः तस्मादतन्मय-त्वात्, तस्य दर्शनादिति। यथा पिप्पल्यः पार्थिवास्तासामाग्नेयो रस इति॥ ५०॥

एवं तस्य पक्षस्यासम्भवं प्रदर्श्य स्थितपक्षदृढीकरणार्थमेवमुच्यते—

पृथिव्यपां रसस्येतरैस्त्रिभिरन्यथात्वगमनाद् रसभेदः॥ ५१॥

इति। पृथिव्यपामिति सम्बन्धलक्षणा षष्ठी। तयोरेव भूतयोरयं रसः। तस्य रसस्य इतरैस्त्रिभिरग्न्यादिभिरन्यथात्वगमनात्, तैरन्यथात्वं नीयते रस इत्युक्तं भवति॥ ५१॥

एवं रसभेदः प्रत्ययकृतो घटशरावादिभेदवत् प्रसिद्धेन निदर्शनेनाम्ल-दीनामन्यथात्वगमनकारणत्वं साधयति—

अत्र विदाहविपाकपरिणामा निदर्शनम् ॥ ५२ ॥

इति । अत्रास्मिन्नन्यथात्वगमनेऽग्न्यादीनां कारणत्वे विदाहश्च निदर्शनम् । यथा क्षीरमुपयुक्तं विदह्यमानमग्निना पाकादम्लविपाकत्वं कटुकविपाकत्वं चोपपद्यते, रसान्तरत्वं षड्रसो(प)पाद्याहारोऽभ्यवहृत-स्तथैवेति । विपाकश्चात्र निदर्शनम् । विपाक इति बाह्येनाग्निना बाह्यस्य द्रव्यस्य यथा तिन्त्रिणीकफलमाम्लमग्निना पक्वं मधुरीभवति, एवमग्ने-रन्यथात्वगमनं दृष्टम् । तस्माज्जानीमो रसभेदानां च कारणमग्निरिति । परिणामश्च निदर्शनम् । परिणामो नाम कालान्तराद् रसान्तरप्राप्तिः । यथा मधुरस्य क्षीरस्य दधिरूपमापन्नस्याम्लत्वमत्रान्यथात्वगमनहेतुषु त्रिषु भूतेष्वयं कालः कतरद् भूतमिति न ज्ञायते । कालद्रव्यपदार्थवादिभिर्य-न्यैश्चान्यथात्वगमनसाधको भवति । त्रिभिरितरैरित्यभ्युपगमपक्षे न घटत इति यदि, बौद्धानां सुतरां सिद्ध्यति। तेषां भूतव्यतिरेकेण काला-भावाच्छीतोष्णाभ्यन्तरत्वादिति ॥ ५२ ॥

अन्यथात्वगमनेऽन्यदपि किञ्चित् परीक्षितव्यमित्याह—

अन्यथात्वगमनमनुपूर्वेणेत्येके ॥ ५३ ॥

इति । एके पुनराचार्या मन्यन्तेऽन्यथात्वगमनमनुपूर्वेणैव भवति । मधुर आम्लभावमापद्यते । आम्लस्तु लवणभावमित्यादि ॥ ५३ ॥

नायमेकान्तः ॥ ५४ ॥

क्वचित् पुनरस्ति । अयं तावत् पक्ष एकान्तो न भवति । यथा— मधुरं क्षीरमाम्लं भवतीति । मधुरः श्लेष्मा मधुरो भवति विदग्धं कषायं कदलीफलं मधुरं भवति । आम्लं सहकारफलं परिणतं मधुरं भवतीति ॥ ५४ ॥

अन्यथात्वमेव न युक्तमिति मन्यमानस्त्वाह —

परद्रव्यस्य परगुणाप्राप्तेरप्राप्य चान्यथात्वगमना-नुपपत्तेर्न युक्तम् ॥ ५५ ॥

इति । युक्तमन्यथात्वगमनं परद्रव्यस्य अन्यस्य द्रव्यस्य । परस्य वा द्रव्यं परद्रव्यं, परस्यान्यस्य गुणस्येति परस्य गुणः परगुणः ।

अन्यगुण इत्यर्थः। तस्य परगुणस्याप्राप्तेरगमनात्। स्वाश्रयपरित्यागं न कुर्वन्ति हि गुणाः, अस्वतन्त्रत्वात्। अप्राप्य असङ्गत्य। तेन द्रव्येण अन्यथात्वगमनस्यानुपपत्तेर्न युक्तमित्यर्थः। तद्यथा—अग्निना पच्यमानं तिन्त्रिणीकफलं मधुरत्वमापद्यमानं कथमापद्यते। अग्निगतं हौष्ण्यं स्वाश्रयं मुक्त्वा तत्फलं न सङ्क्रामति। फलस्य वाम्लो रसः स्वाश्रयव्यतिरेकेणाग्निद्रव्यं न गच्छति। एवं सति कथं तस्याम्लस्य मधुरीभावः सम्पद्यते। तस्मान्नास्तीत्यर्थः। तद्यथा—अग्निना ॥ ५५ ॥

एतेन सर्वरसगुणकर्माणि प्रत्युक्तानि ॥ ५६ ॥

एतेन रसानामन्यथात्वगमनप्रतिषेधेन। सर्वेषां रसानां गुणानां च कर्माणि प्रत्युक्तानि प्रतिषिद्धानि। कथमिति। मधुरं पित्तं शमयतीति। कथम्। तस्मान्माधुर्यं स्वाश्रयं परित्यज्य पित्तमुपसर्पतीति। तस्य काटुक्यं वा पित्तस्य वा काटुक्यं स्वाश्रयमपहाय कथं माधुर्यमुपयाति। एवं संसर्गाभावे क्रियाप्रवृत्तिर्नास्तीति। यदि संसर्गेण विना क्रिया प्रवर्तेत, सर्वकालं स्यात् ॥ ५६ ॥

एवं गुणकर्म च विज्ञेयम् ॥ ५७ ॥

शीतं मृदु पिच्छिलं पित्तघ्नं इत्यादिषु ॥ ५७ ॥

द्रव्यकर्माणि च रसगुणप्रशमनवर्धनं प्रति यानि ॥ ५८ ॥

शास्त्रेषूक्तानीत्यर्थः। तानि चानेनैव प्रत्युक्तानि द्रव्यकर्माणि, वसा स्नेहयति मुस्ता दीपयतीत्यादीनि। तानि चेति। यद्ययमर्थः स्यात्, पूर्वकेणैव सिद्धत्वादेतद्वाक्यमनर्थकं स्यात्। वसायां स च स्नेहस्वाधारपरित्यागं न करोतीत्यादिना। रसगुणानां च पूर्वोक्तानामपि कर्माणि वर्धनप्रशमनान्येवेति। तस्मादत्रैवं शोभेत। द्रव्यकर्माणि यानि बाह्यानि रसानां गुणानां च वर्धनप्रशमनं प्रतीति। रसानां वर्धनं प्रति तावद् यथा—क्षीरपरिभावितं तिलानां तैलं परममधुरं भवति। तस्यैव प्रशमनं ब्राह्मीस्वरसपरिभावितानां माधुर्यनाश इति। गुणानां वर्धनप्रशम (ने) तावद् यथा—व्यजनवातेन शीतमुदकमतिशीतं भवति। तदेवौष्ण्यं व्यजनवातेन शाम्यतीति। अत्रापि परद्रव्यस्य परगुणाप्राप्तेरित्येतस्य विधानस्य विन्यासो योज्य इति। एवं सर्वा चिकित्सा प्रत्युक्तेति। अत आह—तत्समीकरणार्थम् ॥ ५८ ॥

संयुक्तसमवायस्तत्र हेतु ॥ ५९ ॥

इति । संयुक्तेषु द्रव्येषु गुणानां समवायः संयुक्तसमवायः समवायो युगपत् स्थितिः । तत्र रसानामन्यथात्वगमने रसगुणानां धातुदोषमलानां वर्धने प्रशमने चेत्यर्थः । हेतुः कारणम् । संयोगो नाम पृथक् सिद्धानामर्थानां सहभावः संयोग इति । यत्र सिद्धानां समवायः एकदेशे युगपत्स्थितिः । यथा रूपादीनां द्रव्ये । यदा कटुकद्रव्यं श्लेष्मा च सह गच्छतः । तत्र संयुक्तयोः कटुकद्रव्यश्लेष्मणोर्नैरन्तर्येण व्यवस्थितयोर्ये गुणाः काटुक्यौष्ण्यतैक्ष्ण्यलाघवमाधुर्यशैत्यमार्दवस्नेहगौरवाणि परस्परमासन्नाः परस्परविरोधाच्छाम्यन्तीति । एवं सर्वत्र सर्वथा संयोगपूर्विका क्रियाप्रवृत्तिरित्युक्तं भवति । तस्मात् संयोगो नाम गुणविशेषो ह्यवगन्तव्य इति । परादिषु गुणेषु सिद्धयपायेष्वत एव संयोगश्चरकेणोक्तः । यथा—

"संख्या स्याद् गणितं योगः सह संयोग उच्यते ।
द्रव्याणां द्वन्द्वसर्वैककर्मजोऽनित्य एव तु ॥"

इति ॥ ५९ ॥

द्रव्यस्वभावः पुनरनन्तरसगुणवीर्य (स्य?) विपाकावस्थत्वाद् द्रव्याणामचिन्त्यः ॥ ६० ॥

इति । अस्य वाक्यस्यावकाश एव नास्ति । रसाश्चिन्त्यमानाः प्रकृताश्चेति । केचिदेवमत्र सम्बन्धं ब्रुवते । रसादीनां पञ्चानां पदार्थानां स्वभावाश्चिन्तिताः कारणतः फलतो विकारतश्च । द्रव्याणां स्वभावः कस्मान्नचिन्त्यत इत्यत्राह — द्रव्यस्वभावः पुनरिति । तदपि न युक्तमिवाभाति, द्वितीयेऽध्याये सर्वं सर्वथा विचारितमिति । अनन्तरसगुणवीर्यविपाकावस्थत्वाद् इत्यस्य हेतोरर्थमेवं सम्बन्धवादिन एवं वर्णयन्ति । अनन्तरसगुणवीर्यविपाकानामवस्था येषां द्रव्याणां तान्यनन्तरसगुणवीर्यविपाकावस्थानि द्रव्याणि । द्रव्याणामन्तर्भावादित्युक्तमेवमनन्तत्वादचिन्त्यत्वमिति । अयमप्यर्थवन्न प्रतिभाति । कुतः । आनन्त्ये सत्यपि लक्षणावरोधात् । सर्वं चिन्त्यते, न प्रतिभेदं प्रतिपदार्थं वेति । तस्मादत्रावधार्यताम् संयुक्तसमवायः तत्र हेतुरिति ब्रुवतोऽवश्यसंयोग-

पूर्वक एव फलेनाभिसम्बन्ध इति प्रापितम्। प्रापिते परस्त्वाह—संयोगेन विनापि लोके कर्म दृश्यते। यथायस्कान्तोऽयः समाकर्षति संयोगेन विना। पटहशब्दश्रवणादगदद्रव्येण संयोगं विना विषस्योपशमो भवतीत्येवमन्तर्लीनं पूर्वपक्षं मनसि कृत्वा द्रव्यस्वभावः पुनरित्यादि। अत्र पुनःशब्दश्च पूर्वोक्तपक्षनिराकरणार्थः। द्रव्यस्वभावः पुनरयं चोद्यरूपेण भवता प्रदर्शित इति। स खलु स्वभावोऽचिन्त्यः। कस्मादिति। यावदनन्तररसगुणवीर्यविपाकावस्थत्वात्। कस्मादिति। यावदनन्तररसगुणवीर्यविपाकावस्थत्वाद् द्रव्याणामिति। अत्रायमन्तशब्दः समीपवाची अवसानवाची चेति द्विविधः। गुल्मान्ते सैन्यमासीतेत्यत्र समीप इति गम्यते। दिनान्ते भोक्तव्यमित्यत्र पर्यवसान इति गम्यते। अत्रान्तशब्दः समीपवाची। तस्य प्रतिषेधः न अन्तः अनन्त इति। असन्निहितरसगुणवीर्यविपाकावस्थत्वादित्युक्तं भवति। सन्निहितत्वं दोषधातुमलैरिति कदाचिद् दोषधातुमलैरसन्निहितरसावस्थं च भवति द्रव्यं कदाचिदसन्निहितगुणावस्थं चेति। अत्रोदाहरणं पूर्वोक्तपटहपताकादिसंस्थितागदद्रव्यरसगुणावस्था ॥ ६० ॥

तस्माद् विशेषेणागम एव प्रमाणं चिकित्सायाम् ॥ ६१ ॥

इति। ईदृशेष्वचिन्त्येषु गुणानामवस्थान्तरेषु आगममेव प्रमाणीकृत्य फलेन सम्बन्धोऽनुसर्तव्य इति। कटुकापिप्पली पित्तं शमयति मृदुशीतवीर्यत्वादिति न विशेषः स्यात् ॥ ६१ ॥

ते यतो येनेत्यत्र ते गुणनिवृत्तं कर्म कुर्वन्तीत्युक्तं भवति। कैर्गुणैः के रसाः कं दोषं वर्धयन्ति प्रशमयन्ति चेति न ज्ञायत इति तत्प्रकाशनार्थमिदमुच्यते—

माधुर्यस्नेहगौरवपैच्छिल्यमार्दवशैत्यैः श्लेष्माणं वर्धयति मधुरः ॥ ६२ ॥

माधुर्येण श्लेष्मणो माधुर्यं वर्धयति, मधुरः स्नेहेन स्नेहं गौरवेण गौरवं, पैच्छिल्येन पैच्छिल्यं, मार्दवेन मार्दवं, शैत्येन शैत्यमिति ॥ ६२ ॥

अस्य हेत्वर्थमाह—

स्वयोनेरागमाद् विवृद्धिर्दोषधातुमलानाम् ॥ ६३ ॥

स्वयोनेरागमात् स्वजातीयस्यागमात् प्रतिलम्भाद् विवृद्धिर्दोष-

धातुमलानां भवति यस्मात्, तस्मादेवमुक्तमित्यवगन्तव्यम्। यस्माच्छन्दो लुप्त इत्यवगन्तव्यः ॥ ६३ ॥

क्षयः कथमिति।

क्षयः प्रतिपक्षस्यागमात् ॥ ६४ ॥

प्रतिपक्षस्य प्रत्यनीकस्यासमानजातीयस्यागमात् पूर्ववद् भवति ॥ ६४ ॥

कोपयति क्लेदयति चैनमम्लः औष्ण्यात् तैक्ष्ण्याद् गौरवात् स्नेहाच्च ॥ ६५ ॥

एवं श्लेष्माणं कोपयतीति स्थानात् प्रच्युतिं करोति, क्लेदयति च, औष्ण्यतैक्ष्ण्याभ्यामाग्नेयाभ्यां श्लेष्माणं प्रस्तीनं घनं विलीनं कृत्वा क्लेदयति, गौरवस्नेहाभ्यामुपचयं च करोति। एवं सौम्याग्नेयोऽम्लः श्लेष्मणः सौम्यस्य सौम्यभावेन चाग्नेयभावेन चोपकरोतीति प्रदर्शितं भवति। क्लेदयति चेत्यत्र चशब्दः सञ्चयं च करोतीत्युपसंहारार्थः ॥ ६५ ॥

विष्यन्दयति चैनं लवणः ॥ ६६ ॥

विष्यन्दयति प्रकोपयति चेति करोति औष्ण्यादिभिः पूर्ववत् ॥ ६६ ॥

काटुक्यौष्ण्यरौक्ष्यलाघवैश्च पित्तं वर्धयति कटुकः ॥ ६७ ॥

एभिः काटुक्यादिभिरात्मीयैः पित्तस्य तुल्यजातीयैः पित्तं वर्धयति कटुकः। शेषं पूर्ववत्। कटुकस्य वायव्यभागेन उपकारो रौक्ष्यलाघवाभ्यां भवति ॥ ६७ ॥

पित्तस्य भृशविदाहित्वादुष्णत्वात् तीक्ष्णत्वाच्च विदाहयति कोपयति चाम्लः ॥ ६८ ॥

चशब्दः पूर्ववत् ॥ ६८ ॥

अम्लेण लवणो व्याख्यातः ॥ ६९ ॥

एभिर्गुणैरेतदेव कर्म करोतीति ॥ ६९ ॥

शैत्यरौक्ष्यवैशद्यविष्टम्भैर्वायुं वर्धयति कषायः ॥ ७० ॥

एभिः शैत्यादिभिः वायुं वर्धयति कषायः। सर्वत्र वर्धयतीत्युक्ते

सर्वे एव वृद्धेरवस्थाविशेषाः परिगृहीता भवन्ति। तथापि तत्र तत्र विशेषकार्यप्रदर्शनार्थं प्रकोपादिवचनम्। विष्टम्भनं मलानामप्रवृत्तिर्वायोः सञ्चारनिरोधो वा पार्थिवेन भागेन ॥ ७० ॥

शैत्यरौक्ष्यवैशद्यलाघवमार्दवैरेनं कोपयति तिक्तः ॥ ७१ ॥

शैत्यरौक्ष्यादिभिर्भावैर्वायुना तुल्यजातीयैर्वायोरेवमुपकरोति ॥ ७१ ॥

रौक्ष्यलाघवकाटुक्यैरेव वायुं कोपयति कटुकः ॥ ७२ ॥

एवशब्दोऽवधारणार्थः। अनयावधारणया नोष्णतीक्ष्णाभ्यामित्युक्तं भवति ॥ ७२ ॥

इदानीं रसानां संयुक्तानामसंयुक्तानां च विकल्पसंख्यार्थमाह —

विकल्पाः पुनरेतेषां त्रिषष्टिः ॥ ७३ ॥

इति। विकल्पा भेदाः। पुनःशब्दः पक्षान्तरनिवृत्त्यर्थः। एषां षण्णां रसानां त्रिभिरधिका षष्टिरिति ॥ ७३ ॥

तेषामेकैकश्येन षड् भेदाः ॥ ७४ ॥

तेषां भेदानामिति निर्धारणार्था षष्ठी। एकैकशः षड् भेदा भवन्ति। मधुरादयः पूर्वोक्ता एव ॥ ७४ ॥

इदानीं द्विकाः कतीत्यत्राह —

पूर्वः पूर्वः परैः परैर्युक्तो द्विकास्ते पञ्चदश। मधुरः पञ्चभिराम्लश्चतुर्भिर्लवणस्त्रिभिः कटुर्द्वाभ्यां तिक्त एकेन ते पञ्चदश ॥ ७५ ॥

द्विकाः भेदाः पञ्चदश च भवन्ति। कथं ते विभज्यन्त इति। पूर्वः पूर्व इति। पूर्वः पूर्वो रसः परै रसैर्युक्तः द्विको रसो भवति। ते द्विका गण्यमानाः पञ्चदश। सर्वेषां पूर्वो मधुरः शेषैः पञ्चभिर्योगं गच्छति मधुराम्लो मधुरलवणः इत्यादि। आम्लश्चतुर्भिः शेषैर्योगं गच्छति। लवणस्त्रिभिर्योगं गच्छति शेषैः। कटुर्द्वाभ्यां तिक्त एकेनेति वाक्यैरेव गतार्थत्वान्न विपञ्च्यते ॥ ७५ ॥

त्रिकभेदा वक्ष्यन्ते —

**पूर्वेषु त्रिषु त्रयो द्विकाः तेषामेकैकस्त्रिभिरितरैर्योज्यः ॥ ७६ ॥**

पूर्वेषु मधुराम्ललवणेषु त्रिषु त्रयो द्विका निष्पद्यन्ते। यथा मधुराम्लं मधुरलवणमम्ललवणम्। तेषां द्विकानामेकैकः पृथक् पृथगित्यर्थः। त्रिभिरितरैरवशिष्टैः कटुकतिक्तकषायैर्योज्यः। त्रिकभेदप्रकरणत्वादितरैः प्रत्येकश इति गम्यते। यथा मधुराम्लकटुकः मधुराम्लतिक्तः मधुराम्लकषाय इत्येकेन द्विकेन त्रयो भेदा निष्पद्यन्ते। एवमवशिष्टाभ्यां च द्विकाभ्यां प्रत्येकश्येन त्रयस्त्रयो भेदा भवन्ति। एवं तेनैवोत्तरेषु योज्याः ॥ ७६ ॥

**उत्तरेषु त्रिषु द्विकाः। तेषामेकैकस्त्रिभिरितरैर्योज्यः ॥ ७७ ॥**

उत्तरेषु कटुकतिक्तकषायेषु पूर्ववद् द्विका निष्पद्यन्ते। कटुकतिक्तः कटुककषायः तिक्तकषाय इति। तेषां द्विकानामेककस्त्रिभिराद्यैर्मधुराम्ललवणैर्योज्यः — कटुकतिक्तमधुरः कटुकतिक्ताम्लः कटुकतिक्तलवण इति। एवं शेषाभ्यां च द्विकाभ्याम्। ते च नवभेदाः। एवमेते पूर्वोक्ताः प्रत्येकशश्चेत्यष्टादश भवन्ति ॥७७॥

**पूर्वे चोत्तरे च ॥ ७८ ॥**

पूर्वे च त्रयः एकस्त्रिकः उत्तरे च त्रय एकस्त्रिक इति द्वाभ्यामाभ्यामेवं विंशतिस्त्रिका भवन्ति ॥ ७८ ॥

इदानीं चतुष्काः —

**पूर्वेषु त्रिषु त्रयो द्विका ये ते परेषां त्रयाणां त्रिभिर्द्विकैः प्रत्यैकश्येन योज्याः ॥ ७९ ॥**

पूर्वेषु मधुरादिषु पूर्वोद्दिष्टास्त्रयो द्विकाः। ते परेषामुत्तरेषां कटुकतिक्तकषायाणां त्रिभिर्द्विकैः प्रत्यैकश्येन एकं प्रत्येकं प्रति योज्याः। यथा मधुराम्लकटुकतिक्तः मधुराम्लकटुककषायः मधुराम्लतिक्तकषाय इति एतेन द्विकेन युक्तास्त्रयो भेदाः निष्पद्यन्ते। एवं शेषाभ्यामिति तेनैव चतुष्का भवन्ति ॥ ७९ ॥

**पूर्वे चोत्तरैरुत्तरे च पूर्वैः ॥ ८० ॥**

पूर्वे च त्रयो रसाः उत्तरैस्त्रिभिरेकैकश्येन योज्याः। यथा मधुराम्लकटुकः तथा तिक्तेन कषायेण चेति त्रयो भेदाः। उत्तरे च त्रयः पूर्वैर्योज्याः। यथा कटुकतिक्तकषायमधुरः, एवमाम्लेन लवणेन चेति त्रयो भेदाः। एते च षड्भेदाः पूर्वैकैर्नवभिर्मिश्रीकृताः पञ्चदश चतुष्का भवन्ति ॥ ८० ॥

इदानीं पञ्चकाः —

एकैकमुक्ताः षट्पञ्चका एकैकमपहाय ॥ ८१ ॥

इति यः पूर्वं परित्यक्तः, स पश्चात् प्रयोगे गृह्यते। एवं सर्वत्र। यथा मधुराम्ललवणकटुकतिक्तः। मधुराम्ललवणकटुककषायः। इत्येवं ते षड्भेदाः पञ्चका भवन्ति ॥ ८१ ॥

एक एव षट्कः ॥ ८२ ॥

षण्णां समुदाय एक एव। एवमेते भेदाः समासतस्त्रिषष्टिर्भवन्ति। आह च —

"एकद्वित्रिचतुष्पञ्चषट्कसंयोगजाः क्रमात्।
षट्त्रिपञ्चचतुष्पञ्चत्रिपञ्चत्र्योकसंज्ञिताः ॥
एते यथाक्रमं भेदाः संख्यया परिकीर्तिताः।
रसानामिति विज्ञेयास्त्रिषष्टिः परिपूरकाः ॥"

इति ॥ ८२ ॥

इदानीं रसानां शास्त्रेषु दोषं प्रत्युद्दिष्टानां सामान्येन प्रयोगवैशेष्याद् विशेषं प्रदर्शयितुकाम आह —

विदध्याद् वा लवणाम्लमधुरानानुपूर्व्येण ॥ ८३ ॥

इति। एकस्मिन् दोषे रसानामयमवचारणविकल्प उद्दिश्यते कदा खल्वयं प्रयोग इति ॥ ८३ ॥

अवस्थापेक्ष उपयोगक्रमः ॥ ८४ ॥

योऽयं क्रमो मया वक्ष्यते, तस्य योग्या या अवस्था वायोस्तस्यां प्रयोज्य इति। अवस्थाविशेषं चोत्तरत्र स्वयमेव दर्शयति पक्वाशय इत्यादि। आनुपूर्व्येणेति लवणश्च पूर्वः प्रयुक्तः सरत्वात् तैक्ष्ण्यात् स्रोतांसि विशोधयति आग्नेयत्वादग्निं दीपयति औष्ण्याद् वायोः शैत्य-

मभिभवति। ततोऽम्लः प्रयुक्तो लवणादाप्योऽधिक इति गौरवाल्लाघवं जयति वायोः स्नेहाद् रौक्ष्यं चेत्येवमादि करोति। मधुरस्त्वन्ते प्रयुज्यमानो वायोः प्रसादं जनयति माधुर्यात् कादुक्यमभिभूयेत्येवमादि करोति ॥ ८४ ॥

तत्रैकैकशोऽवचारणविकल्पाः षट् ॥ ८५ ॥

एकैकशः एकमेकं कृत्वा प्रयोगे अवचारणविकल्पाः प्रयोगविकल्पाः षड् भवन्ति ॥ ८५ ॥

कथमित्याह —

तत्र युक्तिः एकैक इतराभ्यां पर्यायेणेतरेतरं मध्यान्त्याभ्यां युक्ता द्विशः षट् ॥ ८६ ॥

तत्र तस्मिन्नवचारणविकल्पे युक्तिः तेषां विकल्पानामुत्पत्तिमार्गः। एकैकः लवणश्चाम्लश्च मधुरश्चेति। एतेष्वेक इतराभ्यामवशिष्टाभ्यां पर्यायेण क्रमेण इतरस्येतरो मध्यश्च भवत्यन्त्यश्च। तथा अन्यश्च क्रमेणैव युक्तः एकैक इति योज्यम्। पूर्वमध्यजघन्यत्वं भोजनकालस्य वा दिवसभेदस्य वापेक्षया भवति। तद्यथा— पूर्वं लवणः ततो मधुरः ततोऽम्लः। पूर्वं लवणः ततो मधुरः ततोऽम्लः। एवं लवणस्य पूर्वप्रयोगे द्वौ विकल्पौ भवतः। तथाम्लस्य मधुरस्य च पूर्वप्रयोगे द्वौ द्वौ भवतः। एवं षड् विकल्पा भवन्त्येकैकशः प्रयोगे। द्विशः षडिति द्विशः कृत्वा प्रयोगेऽपि षडेव ॥ ८६ ॥

तत्र युक्तिरेकैको द्विक इतराभ्यां पर्यायेणेतरेतरमध्यान्त्याभ्यां युक्तः ॥ ८७ ॥

अत्र त्रिषु त्रयो द्विका निष्पद्यन्ते। यथा लवणाम्लः लवणमधुरः अम्लमधुर इति। अत्रापि पूर्ववदेकैको द्विकः इतराभ्यां द्विकाभ्यामितरेतरस्य मध्यान्त्याभ्यां योज्यः। यथा—पूर्वं लवणाम्लः ततो लवणमधुरः ततोऽम्लमधुरः। पूर्वं लवणाम्लः ततोऽम्लमधुरः ततो लवणमधुर इति। एवं लवणाम्लेन पूर्वप्रयुक्तेन द्वौ विकल्पौ सम्भवतः। तथा शेषाभ्यां द्विकाभ्यामिति षड् विकल्पा भवन्ति ॥ ८७ ॥

त्रिक एक एव ॥ ८८ ॥

त्रिको लवणाम्लमधुराख्यः एक एव। भोजनस्य वा कालस्य वा भेदात् पूर्वमध्यावरं योज्यम् ॥ ८८ ॥

एते त्रयोदश निर्मिश्राः ॥ ८९ ॥

पूर्वोक्ता द्वादश चायमेकश्चेति त्रयोदश ॥ ८९ ॥

निर्मिश्रत्वमेककद्विकत्रिकाणां परस्परासंयोगात् ॥ ९० ॥

मिश्रास्त्वेकका द्विकैस्त्रिकैः द्विकाश्चैककैस्त्रिकैस्त्रिकाः द्विकैरेककैश्च ॥ ९१ ॥

मिश्रा वक्ष्यन्ते। ते च त्रिप्रकाराः। एकका द्विकैस्त्रिकैर्मिश्रिताश्च। द्विका त्रिकैश्चैककैर्मिश्रिताश्च। त्रिकाश्चैककैर्द्विकैर्मिश्रिताश्चेति ॥ ९१ ॥

तत्र द्विकाद्यमध्यान्त्यैरेककैरष्टादशाष्टादश ॥ ९२ ॥

द्विका आदौ मध्ये अन्ते च येषामेककानां ते द्विकाद्यमध्यान्त्याः तै द्विकाद्यमध्यान्त्यैरेककैरिति। तत्र त्रिषु मिश्रभेदेषु एककंद्विकमिश्रैरेते भेदा भवन्ति, द्विकाद्यैर्द्विकमध्यैर्द्विकान्त्यैश्चैककैः। कथमिति। लवणाम्लः लवणमधुरः अम्लमधुर इति त्रयो द्विकाः। एतेषां द्विकानामेकैको द्विक आदौ लवणाम्लमधुराः एकका मध्ये चान्ते च भवन्ति। एवमादिगतैर्द्विकैरेककमध्यपर्यवसानैरष्टादश भेदा भवन्ति। एवमादिगतैर्द्विकैरेककाद्यपर्यवसानैरष्टादश भवन्ति। तथैवान्त्यगतैरपि द्विकैरेककैकाद्यमध्यैरष्टादश भवन्ति। अष्टादशाष्टादशेति तत्र वीप्सा ॥ ९२ ॥

तत्र युक्तिरेककैः पृक्तो द्विकस्त्रिभिरपि द्विकैरपृक्तैरितरेतरपूर्वैः युक्तिः प्रत्येकशः द्विकैरेकैराद्यमध्यान्त्यैरष्टादश ॥ ९३ ॥

**प्रयोगमार्गः—एककैस्त्रिभिरपि पृक्तो द्विकः। द्विकैरपृक्तैः एककैरित्यर्थः। इतरेतरपूर्वैरित्ययं च विशेषः एककानामेव। एतदुक्तं भवति—एककेन द्विकेन द्वाभ्यामे (क) काभ्यामेकः प्रयोगो भवतीति।**

यथा—पूर्वं लवणाम्लः ततो लवणः ततोऽम्लः । न । पूर्वं लवणाम्लः ततो लवणः ततो मधुरः । न्न । पूर्वं लवणाम्लः ततोऽम्लः ततो लवणः। न्य । पूर्वं लवणाम्लः ततोऽम्लः ततोमधुरः । क्त । पूर्वं लवणाम्लः ततो मधुरः ततो लवणः । त्र । पूर्वं लवणाम्लः ततो मधुरः ततोऽम्लः। हा । एवं लवणाम्लद्विकाः लवणाम्लमधुरैकमध्यपर्यवसानाः षट् प्रयोगा भवन्ति । एवं लवणमधुरद्विकाभ्यामेककमध्यपर्यवसानाः षट् भवन्ति। तथा अम्लमधुरद्विकाद्याश्च पूर्ववत् षट् भवन्ति । एवं त्रिभिः षड्भि-रष्टादश भवन्ति। इदानीं द्विकमध्या एककाद्यपर्यवसाना भेदाः प्रदर्श्यन्ते। यथा—यत्पूर्वं लवणः ततो लवणाम्लः ततोऽम्लः । न । पूर्वं लवणः ततो लवणाम्लः ततो मधुरः । न्न । पूर्वमाम्लः ततो लवणाम्लः ततो मधुरः । न्य । पूर्वं मधुरः ततो लवणाम्लः ततो लवणः । क्त । पूर्वं मधुरः ततो लवणाम्लः ततोऽम्लः । त्र । एवं लवणाम्लद्विकमध्या एक-काद्यपर्यवसानाः षट् प्रयोगा भवन्ति । तथा लवणमधुरमध्याः अम्ल-मधुरमध्याश्चैककाद्यमध्यपर्यवसानाः प्रयोगाः षट् भवन्ति । एवमेते चाष्टादश । इदानीं द्विकान्त्याः एककाद्यमध्याः प्रयोगा दृश्यन्ते । यथा पूर्वं लवणः ततोऽम्लः ततो लवणाम्लः । न । पूर्वं लवणः ततो मधुरः ततो लवणाम्लः । न्न । पूर्वमाम्लः ततो लवणः ततो लवणाम्लः । न्य । पूर्वं मधुरः ततो लवणः ततो लवणाम्लः । क्त । पूर्वं मधुरः ततोऽम्लः ततो लवणाम्लः । त्र । पूर्वमम्लः ततो मधुरः ततो लवणाम्लः । हा । एवं लवणाम्लद्विकान्त्या एकाद्यमध्याः षट् प्रयोगा भवन्ति । तथा लवणमधुरद्विकान्त्याः षट् । अम्लमधुरद्विकान्त्याश्च षट् । एवमेते च द्विकान्त्या एककाद्यमध्या अष्टादश प्रयोगा भवन्ति । एवमेते समासतः प्रयोगाश्चतुष्पञ्चाशद् भवन्ति । आह च—

"आद्यन्तमध्यकैर्द्विकैरेककाः समुदायतः ।
चतुष्पञ्चाशदेवात्र योगान् सञ्जनयन्ति ते ॥"

इति ॥ ९३ ॥

एवं द्विकाद्यमध्यपर्यवसाना एकका उक्ताः । त एवैककास्त्रिकाद्यमध्य-पर्यवसानाश्च भेदत उच्यन्ते —

त्रिकाद्यमध्यान्तैरष्टादश ॥ ९४ ॥

त्रिकाद्यैस्त्रिकमध्यैश्च त्रिकान्त्यैश्चैककैरष्टादश भेदा भवन्ति ॥ ९४ ॥

युक्तिस्तु सैव इति ॥ ९५ ॥

या पूर्वोक्ता सैवेत्यर्थः। यथा पूर्वं लवणाम्लमधुरः ततो लवणः ततोऽम्लः। न। पूर्वं लवणाम्लमधुरः ततो लवणः ततो मधुरः। म्र। पूर्वं लवणाम्लमधुरः ततोऽम्लः ततो लवणः। न्य। पूर्वं लवणाम्लमधुरः ततोऽम्लः ततो मधुरः। क्र। पूर्वं लवणाम्लमधुरः ततो मधुरः ततो लवणः। ञ्ञ। पूर्वं लवणाम्लमधुरः ततो मधुरः ततोऽम्लः। हा। एवं त्रिकाद्या एककमध्यपर्यवसानाः षड् भवन्ति विकल्पाः। तथा त्रिकमध्या एककाद्यपर्यवसानाः षट्। त्रिकान्त्याश्चैककाद्यमध्याश्च षडिति समासतोऽष्टादश जायन्ते। आह च—

"आदिमध्यान्तगैस्त्रिकैरेकका व्यक्तिभेदतः।
अष्टादशानां भेदानां भवन्ति जनकाः सकृत् ॥"

इति। एवमेते पूर्वकाश्च विकल्पा द्विसप्ततिर्भवन्ति। एवं द्विकैः परस्परसंपृक्तैरेककैरादिमध्यान्त्यभावेन पृक्तैर्भेदाः प्रदर्शिताः ॥ ९५ ॥

इदानीमेककैरपृक्तैः परस्परं द्विकैराद्यन्तभावेन पृक्तैर्भेदाः प्रदर्श्यन्ते—

द्विकैरेककाद्यमध्यान्त्यैरष्टादशाष्टादश ॥ ९६ ॥

इति। एकका आदौ मध्ये अन्ते च तेषां द्विकानां भवन्ति ते एककाद्यमध्यान्त्यास्तैर्द्विकैरेककाद्यमध्यान्त्यैरिति। अत्र प्रयोगः—एककाः पृथक् पृथक् परस्परममिश्रा द्विकानामादौ मध्ये च भवन्ति। द्विकाः परस्परमिश्रास्त्वेककानामादिमध्यपर्यवसानेषु भवन्ति। एवमेककाद्यैर्द्विकैरष्टादशभेदा भवन्ति। तथैवैककमध्यैरेककपर्यवसानैश्चाष्टादश भवन्ति। एककाद्यैस्तावत्—पूर्वं लवणः ततो लवणाम्लः ततो लवणमधुरः। न। पूर्वं लवणः ततो लवणाम्लः ततोऽम्लमधुरः। म्र। पूर्वं लवणः ततो लवणमधुरः ततो लवणाम्लः। न्य। पूर्वं लवणः ततो लवणमधुरः ततोऽम्लमधुरः। क्र। पूर्वं लवणः ततोऽम्लमधुरः ततो

लवणाम्लः । ञ्च । पूर्वं लवणः ततोऽम्लमधुरः ततो लवणमधुरः । हा । एवं लवणपूर्वाः प्रयोगाः षट् । तथाम्लपूर्वा मधुरपूर्वाः षडिति । एवमेककाद्यैर्द्विकमध्यपर्यवसानैरष्टादश । पूर्वं लवणाम्लः ततो लवणः ततो लवणमधुरः । न । पूर्वं लवणाम्लः ततो लवणः ततोऽम्लमधुरः । म्न । पूर्वं लवणमधुरः ततो लवणमधुरः ततो लवणाम्लः । न्य । पूर्वं लवणमधुरः ततो लवणः ततोऽम्लमधुरः । क्ष । पूर्वमम्लमधुरः ततो लवणः ततो लवणाम्लः । ञ्च । पूर्वमम्लमधुरः ततो लवणः ततो लवणमधुरः । हा । एवमेव लवणमध्याः षट् । तथैवाम्लमध्याः षट्, मधुरमध्याश्च षडिति एककमध्यैर्द्विकादिपर्यवसानैरष्टादश भवन्ति । पूर्वं लवणाम्लः ततो लवणमधुरः ततो लवणः । न । पूर्वं लवणाम्लः ततोऽम्लमधुरः ततो लवणः । म्न । पूर्वं लवणमधुरः ततो लवणाम्लः ततो लवणः । न्य । पूर्वं लवणमधुरः ततोऽम्लमधुरः ततो लवणः । क्ष । पूर्वमाम्लमधरः ततो लवणाम्लः ततो लवणः । ञ्च । पूर्वमाम्लमधुरः ततो लवणमधुरः ततो लवणः । हा । एवं लवणपर्यवसानाः षट्, तथाम्लपर्यवसानाः षट्, मधरपर्यवसानाश्च षडिति एककपर्यवसानैर्द्विकाद्यमध्यैरष्टादशैव भवन्ति । एवमेककाद्यमध्यपर्यवसानाः प्रयोगाः समासतश्चतुष्पञ्चाशद् भवन्ति । आह च —

"आदिमध्यान्तविन्यस्तैरेककैः पूर्ववद् द्विकाः ।
जनयन्ति विकल्पानां शतार्धं चतुरुत्तरम् ॥"

इति ॥ ९६ ॥

इदानीं त्रिकमिश्रैर्द्विकैर्द्विकैः कति प्रयोगा इत्यत्राह —

त्रिकाद्यमध्यान्त्यैर्द्विकैरष्टादश ॥ ९७ ॥

इति । त्रिकाद्यैस्त्रिकमध्यैस्त्रिकान्त्यैश्च द्विकैरष्टादशैव विकल्पा भवन्ति सर्वत्र ॥ ९७ ॥

युक्तिस्तु सैव ॥ ९८ ॥

ज्ञेया, या पूर्वमुक्ता । अस्य प्रयोगः — पूर्वं लवणाम्लमधुरः ततो लवणाम्लः ततो लवणमधुरः । न । पूर्वं लवणाम्लमधुरः ततो लवणाम्लः ततोऽम्लमधुरः । म्न । पूर्वं लवणाम्लमधुरः ततो लवणमधुरः ततो

लवणाम्लः । न्य । पूर्वं लवणाम्लमधुरः ततो लवणमधुरः ततोऽम्लमधुरः ष्क । पूर्वं लवणाम्लमधुरः ततो लवणमधुरः ततो लवणाम्लः । ग्र । पूर्वं लवणाम्लमधुरः ततोऽम्लमधुरः ततो लवणमधुरः । हा । एवं त्रिकपर्वाः षट् तथा त्रिकमध्याश्च षडिति तथा त्रिकपर्यवसानाश्च षट् । एवं त्रिकाद्यमध्यपर्यवसाना त्रिका अष्टादश । आह च —

"त्रिकैराद्यन्तमध्यस्थै स्त्रिकाः संपृक्तिमागताः ।
षण्णां त्रिगुणसंख्यानां भेदानां मातृकाः स्मृताः ॥"

इति । एवमेककैस्त्रिकयुक्तानां च विकल्पाः समामनतो द्विसप्ततिर्भवन्ति ॥ ९८ ॥

इदानीं त्रयाणामपि त्रिकद्विकैककानां परस्परसम्पृक्तानां भेदाः प्रदर्श्यन्ते—

त्रिकद्विकैककाद्यमध्यान्त्यैरष्टादशाष्टादश ॥ ९९ ॥

इति ॥ ९९ ॥

त्रिकाद्यैरितरैस्त्रिकमध्यैस्त्रिकान्त्यैर्द्विकाद्यैर्द्विकमध्यैर्द्विकान्त्यैरेककाद्यैरेककमध्यैरेककान्त्यैश्च ॥ १०० ॥

त्रयोऽष्टादश भवन्तीत्युक्तं भवति । युक्तिः पूर्वोक्ता ज्ञेया । येषां प्रयोगक्रमः—त्रिकाद्ये द्विकमध्यैरेककपर्यवसानैरयमेकः क्रमः । अत्र नवभेदा भवन्ति । यथा—पूर्वं लवणाम्लमधुरः ततो लवणाम्लः ततो लवणः । न । पूर्वं लवणाम्लमधुरः ततो लवणाम्लः ततोऽम्लः । म्र । पूर्वं लवणाम्लमधुरः ततो लवणाम्लः ततो मधुरः । न्य । एवं लवणाम्लद्विकेन मध्यगतेन एककैस्त्रिभिरवसानगतैस्त्रयो विकल्पाः सम्भवन्ति । तथा लवणमधुरद्विकेन मध्यगतेन पूर्ववत् त्रयः । तथाम्लमधुरद्विकेन मध्यगतेन पूर्ववत् त्रय इति नव भेदा भवन्ति । इदानीं द्वितीयःप्रयोगः — त्रिकाद्ये रेक(क)मध्ये द्विकावसानैश्च योज्यः । यथा—पूर्वं लवणाम्लमधुरः ततो लवणः ततो लवणाम्लः । न । पूर्वं लवणाम्लमधुरः ततो लवणः ततो लवणमधुरः । म्र । पूर्वं लवणाम्लमधुरः ततो लवणः ततोऽम्लमधुरः । न्य । एवं लवणैकमध्ययुक्तास्त्रयो विकल्पाः तथाम्लैकमध्ययुक्तास्त्रयः । तथा मधुरैकमध्याश्च त्रय इति । एवमेते

नव भेदा भवन्ति। एवं त्रिकाद्यैरष्टादश। इदानीं तृतीयः प्रयोगक्रमः द्विकाद्यैस्त्रिकमध्यैरेककावसानैर्योज्यः। यथा—पूर्वं लवणाम्लः ततो लवणाम्लमधुरः ततो लवणः। न। पूर्वं लवणाम्लः ततो लवणाम्लमधुरः ततोऽम्लः। न्न। पूर्वं लवणाम्लः ततो लवणाम्लमधुरः ततो मधुरः। न्य। लवणान्यद्विकेनादिपतितेन त्रिकेण मध्यगतेन एककैस्त्रिभिरन्तर्गतैस्त्रयो भेदा जायन्ते। तथा लवणमधुरद्विकाद्यास्त्रयः आम्लमधुरद्विकाद्याश्च पूर्ववत् त्रयः। एवं नव भेदा भवन्ति। इदानीं चतुर्थः क्रमः द्विकाद्यै-रेककमध्यैस्त्रिकान्त्यैर्योज्यः। यथा — पूर्वं लवणाम्लः ततोऽम्लस्ततो लवणाम्लमधुरः। न। पूर्वं लवणाम्लस्ततोऽम्लस्ततो लवणाम्लमधुरः। न्न। पूर्वं लवणाम्लः ततो मधुरः ततो लवणाम्लमधुरः। न्य। एवं लवणाम्लद्विकाद्या एककमध्यास्त्रिकान्त्यास्त्रयो विकल्पाः। तथा लवण-मधुरद्विकाद्याः पूर्ववत् त्रयः। अम्लमधुरद्विकाद्याश्च पूर्ववत् त्रय इति नव भेदा भवन्ति। एवं द्विकाद्यैरष्टादश विकल्पा भवन्ति। इदानीं पञ्चमः क्रमः एककाद्यैस्त्रिकमध्यैर्द्विकान्त्यैर्योज्यः। यथा — पूर्वं लवणः ततो लवणाम्लमधुरः ततो लवणाम्लः। न। पूर्वं लवणस्ततो लवणाम्लमधुरः ततो लवणमधुरः। न्न। पूर्वं लवणः ततो लवणाम्ल-मधुरः ततोऽम्लमधुरः। न्य। एवं लवणैककाद्यास्त्रिकमध्याः द्विकान्त्या-स्त्रयः। तथाम्लाद्याः पूर्ववत् त्रयः तथा मधुराद्याः पूर्ववत् त्रयः इति नव विकल्पा भवन्ति। इदानीं षष्ठः क्रमः एककाद्यैर्द्विकमध्यैस्त्रिकान्त्यै-र्योज्यः। यथा — पूर्वं लवणः ततो लवणाम्लः। ततो लवणाम्लमधुरः न। पूर्वं लवणस्ततो लवणमधुरस्ततो लवणाम्लमधुरः। (न्न)। पूर्वं लवणः ततोऽम्लमधुरः ततो लवणाम्लमधुरः इति। न्य। एवं लवणैक-काद्या द्विकमध्यास्त्रिकान्त्यास्त्रयो विकल्पा भवन्ति। एवमाम्लैककाद्येन पूर्ववत् त्रयः मधुरैककाद्येन च त्रय इति नव भेदाः। एवमेकैककाद्यै-रष्टादश भेदा भवन्ति। एते च सर्वसङ्करप्रयोगाः समासतश्चतुष्पञ्चाशद् भवन्ति। आह च —

"द्विकैक(क)त्रिकैर्मिश्रैरादिमध्यान्तयोगतः।
नवगुणसंख्यैः षड्भिर्विज्ञेयाः सर्वसङ्कराः॥"

इति॥ १००॥

इह सर्व एव भेदाः समुदायतः कतीत्यत्राह—

एकादशाधिकं शतद्वयं समुदायतः॥ १०१॥

इति। एकादशोत्तरं द्विशतं भवति। कथमिति। द्विकाद्यमध्यपर्यवसाना एककाश्चतुष्पञ्चाशत्। त्रिकाद्यमध्यान्त्याश्च एकका अष्टादश। एवमेकका द्विसप्ततिर्भवन्ति। तथा द्विकैककाद्यमध्यान्त्या त्रिकाद्यमध्यान्त्याश्च द्विसप्ततिश्चतुष्पञ्चाशच्चाष्टादश चेति एतदुभयं संपिण्ड्य चतुश्चत्वारिंशच्छतं भवन्ति। सर्वसङ्करप्रयोगाश्चतुष्पञ्चाशत् निर्मिश्रास्त्रयोदशेति संपिण्ड्यैकादशोत्तरशतद्वयं भवति॥ १०१॥

निदर्शनमात्रमेतदुक्तम्॥ १०२॥

एकत्रयाणां रसानामवचारणविकल्पं प्रति यदुक्तं, तन्निदर्शनमात्रम् अविशिष्टं च विद्यत इति। अविशिष्टं तत्र रसानां यत्प्रमाणं प्रति दोषावस्थापेक्षया हीनातिरिक्तत्वं क्वचिदभ्यस्तानां प्रयोगः क्वचिदेकस्यैव क्वचिदनेकेषां विकल्पानामिति तत्सर्वं शेषमनुमातव्यमिति॥ १०२॥

पित्ते तिक्तकषायमधुरान् तावन्त एवावचारणविकल्पाः। कटुकतिक्तकषायान् श्लेष्मणि॥ १०३॥

पित्तघ्नानेतान् त्रीन् रसान् प्रयुञ्जीत॥ १०३॥

तत्रापि तावन्त एव॥ १०४॥

अवचारणविकल्पाः॥ १०४॥

एवमवचार्यमाणेषु रसेषु यत्र विरुद्धरसवीर्यविपाकद्रव्यसंयोगो भवति।

तत्र विरोधाविरोधः पुनरनुमातव्यः॥ १०५॥

तत्र विरोधश्चाविरोधश्चानुमातव्यः ज्ञेय इत्यर्थः॥ १०५॥

एवं प्रत्येकशो दोषान् प्रति अवचारणविकल्पा रसानामुक्ताः। दोषेषु संसृष्टेषु सन्निपतितेषु धात्वन्तरगतेषु कथमेते रसाः प्रयोक्तव्या इत्यत्राह—

द्वन्द्वेषु सन्निपाते चावेक्षितव्यान्यवेक्ष्य यथास्वं प्रयोगः संसृष्टः॥ १०६॥

इति। द्वन्द्वेषु च त्रिषु सन्निपाते चैकस्मिन् यथास्वं यथार्हं प्रयोगः संसृष्टः कर्तव्यः। वातपित्तयोः संसृष्टयोर्वातपित्तहराणां रसानां संसृष्टः प्रयोगः। तथान्येष्वपि सन्निपातेषु सर्वेषु यथावस्थम् ऊनातिरिक्ततामवेक्ष्य प्रयोगः ॥ १०६ ॥

इदानीं धात्वन्तरदोषस्थानगतेषु प्रयोगः—

पक्वाशयामाशयरसत्वक्छोणितमांसमेदोऽस्थिशुक्रयकृत्प्लीहाहृदयक्लोमस्नायुसिरागतेषु पुनरेकैकशो द्विशश्च प्रयोगो युक्तितः परीक्ष्यः ॥ १०७ ॥

इति। पक्वाशयगतेषु चामाशयगतेषु च रसगतेषु च दोषेष्विति सर्वत्रैवं वाच्यम्। पुनःशब्दः समुच्चयार्थः। एकैकशश्च प्रयोगः रसानां: द्विशश्च प्रयोगः वातपित्ते श्लेष्मवाते चेति। सर्वशः सन्निपाते युक्तितः प्रकृत्याद्यपेक्षया युक्तितः। योगो युक्तिः तां युक्तिमवलम्ब्य परीक्ष्यः समन्तादीक्षितव्य इति ॥ १०७ ॥

रसानामुपलब्धिः पूर्वं प्रत्यक्षत इत्युक्तम् आस्वादादिति। तस्यापवादार्थमाह —

प्रत्यक्षतोऽनुमानादुपदेशतश्च रसानामुपलब्धिः ॥ १०८ ॥

आस्वाद्य प्रत्यक्षत उपलभ्यन्ते। अनुमानात् पूर्वोक्तं लिङ्गं दृष्ट्वा मधुरोऽयमाम्लोऽयमित्युपलभ्यते। आगमात् कषायं मधु, मधुरमुदकमित्यादि। अथवा आस्वादतः प्रत्यक्षतः रसानां सामान्यत उपलब्धिर्भवति। अनुमानाल्लिङ्गपूर्वाद् विशेषोपलब्धिर्भवति। उपदेशतः कर्मणि रसानां प्रवृत्तिरुपलभ्यत इति। अथवा सर्वत्रास्वादत एव रसो न गृह्यते। आगमतश्च क्वचित् क्वचिदनुमानाच्चेति।

"शीतं कषायं मधुरं विषघ्नं वर्ण्यं च मेधास्मृतिवर्धनं च।
रसायनीयं लघुरुक्ममुक्तं कषायतिक्तं लघुरूप्यमाहुः ॥"

इति। तत्रास्वादतो न लभ्यत इति ॥ १०८ ॥

इदानीं तेषां रसानामाप्यो मधुरः आग्नेयः कटुक इत्येवं यच्छास्त्रोपदिष्टं, तन्नोपपद्यत इत्ययं पूर्वपक्षः प्रदर्श्यते —

तेषां निर्धारणमयमिदम्मय इति न शक्यं भूतानां पृथक्त्वाद् ॥ १०६ ॥

इति। तेषां षण्णां रसानां निर्धारणं निश्चयः कर्तुं न शक्यं केन प्रकारेणेति अयं रस इदम्मय इति। अस्मादेवायं भूतादुत्पन्न इति (न) शक्यमिति। कुत इति भूतानामपृथक्त्वात् अविनिर्भोगवृत्तित्वाद्-भूतानाम्। सर्वत्र सर्वाणि विद्यन्त इति ॥ १०९ ॥

तस्योत्तरमाह —

निर्धारणं पुनर्बहुत्वात् पेलवत्वाद् गुणाधिकारात् क्षपणाद् वर्धनाच्च ॥ ११० ॥

एवमेभिर्हेतुभिर्निर्धार्यते। बहुत्वादाधिक्यात् कस्यचिद्भूतस्य। अविनिर्भूतत्वे सत्यपि कश्चिदेकं भूतमाधिक्येन वर्तते। तस्मादाप्यो मधुर इति निर्धार्यते पेलवत्वादल्पत्वात् कश्चिदेकस्य भूतस्याल्पत्वान्निर्धार्यते। यथा आम्ले आग्नेयत्वे सत्यप्यग्नेरल्पत्वादाप्योऽम्ल इत्युच्यते। बहुत्वादित्यनेनैव सिद्धे पेलव इति न वक्तव्यम्। एकस्यानुद्भूतिरेव तस्य बहुत्वसिद्धिहेतुरिति प्रसिद्धेष्वपि कारणेष्विति न दोषः। उभयथा हि व्यवहारो दृष्टः हान्या वृद्धिरित्युच्यते, स्वशब्देनापीति। गुणाधिकारादिति। आप्यानां गुणानां शीतस्निग्धगुरुमृदूनामेकाधिकरणे दर्शनादाप्य इति निर्धार्यते। आप्यस्य दोषस्य क्षपणादाग्नेय इति। आप्यस्य वर्धनादाप्य इति ॥ ११० ॥

रसपदार्थः सर्वथा परीक्षितः। इदानीं गुणपदार्थः परीक्ष्यते —

शीतोष्णस्निग्धरूक्षविशदपिच्छिलगुरुलघुमृदुतीक्ष्णा गुणाः कर्मण्याः ॥ १११ ॥

एते शीतादयो गुणाः कर्मण्या इति कर्मणि चिकित्सायां पृथक् पृथक् शास्त्रे योग्या इत्युद्दिष्टा रसादयोऽपि गुणा इति तान्त्रिकस्य गुणाभिधानस्य ज्ञापनार्थं गुणा इति वचनम् ॥ १११ ॥

तेषां गुणानां कारणद्रव्येषु कानि भूतानि केषां गुणानामाश्रय इत्याह —

शीतस्निग्धगुरुपिच्छिलास्तत्राप्याः ॥ ११२ ॥

आप्या अद्भिर्निवेदिता इति । एतेष्वपां बाहुल्यं वेदितव्यमिति ॥ ११२ ॥

तैजसमौष्ण्यं तैक्ष्ण्यं च ॥ ११३ ॥

तीक्ष्णोष्णत्वादग्नेः । अन्यत्राप्येवं ग्राह्यम् । तैक्ष्ण्यं स्पर्श एव ज्ञेयमिति केचित् । तद्सम्यगव्यापित्वाद् ॥ ११३ ॥

गौरव्यवैशद्ये पार्थिववायव्ये ॥ ११४ ॥

इति यथाक्रमं नेति युगपद् गौरव्यं च पार्थिववायव्यं वैशद्यं च ॥ ११४ ॥

मार्दवमान्तरिक्षमाप्यं च ॥ ११५ ॥

आपः स्पर्शवत्य इति युक्तं मार्दवस्याप्यत्वं, कथमाकाशस्यास्पर्शवत इति । अत्रैवं स्यात् पीडिते यत् सुखं निम्नं भवति, तन्मृदु । तत्राणूनां गत्यवकाशदानान्निम्नत्वं भवतीति युक्तरूपत्वम् ॥ ११५ ॥

गौरवं पार्थिवमाप्यं च ॥ ११६ ॥

द्वयोर्गुरुत्वात् ॥ ११६ ॥

लाघवमन्यदीयम् ॥ ११७ ॥

लाघवं पृथिव्युदकाभ्यामन्यस्माद् भूतसमूहाद् वाय्वाकाशाग्निलक्षणाद् भवतीति, त्रयाणां भूतानां लघुत्वादिति ॥ ११७ ॥

इदानीं कार्यद्रव्ये तेषां गुणानां व्यवस्थितिरुच्यते —

ते शीतमृदुपिच्छिलेभ्योऽन्यत्र लवणे तुल्यकारणेषु पुनः प्रायेण सर्वद्रव्येषु सर्वे शीतादयः ॥ ११८ ॥

इति । ते शीतादयः तुल्यकारणेषु सर्वद्रव्येषु सर्वे प्रायशो भवन्ति । ते शीतमृदुपिच्छिलेभ्योऽन्यत्र लवणे लवणस्य शीतमृदुपिच्छिलैस्तुल्यकारणत्वं विद्यते । आप्यत्वं "लवणमग्नेरपां चे" ति । तथापि तस्मिन् लवणे शीतमृदुपिच्छिला न सन्तीति । अन्यत्राप्ये क्षीरे आप्यानां शीतमृदुपिच्छिलस्नेहगौरवाणां भावो दृष्ट इति । प्रायेणेति

कश्चिद् व्यभिचरतीति। यथा कुलत्थानामवनिवायुजनितरसानामुष्णत्व-भंगलोड्यादिषु तिक्तेषु गुरुत्वमिति ॥ ११८ ॥

गुणानां दोषान् प्रति समानानीकप्रत्यनीकतां दर्शयन्नाह —

यो यदीयः स तदीयस्य दोषस्य प्रशमनवर्धनः प्रशमनो वा विपरीतस्य ॥ ११९ ॥

इति। यो गुणः यदीयः येन भूतेन निर्वर्तितः अद्भिरग्निना वा, तदीयस्यैव तेनैव भूतेन निर्वर्तितस्य वर्धनो भवति। यथा शीतगुरु-स्निग्धपिच्छिला आप्या आप्यस्य श्लेष्मणः प्रवर्धनाः, विपरीतस्याग्ने-यस्य पित्तस्य प्रशमनास्त्वेते भवन्ति ॥ ११९ ॥

इति नागार्जुनीये रसवैशेषिके नरसिंहकृते भाष्ये
तृतीयोऽध्यायः ॥

## ✓ अथ चतुर्थोऽध्यायः।

इदानीमात्मावसरप्राप्तं वीर्यं भेदत उत्पत्तितश्च विचिन्त्यते—

वीर्याणि पुनश्छर्दनीयानुलोमनीयोभयतोभागप्रशमनीय[1]संग्रह[2]-णदीपनीयप्राणघ्नमदन[3]विदारणश्वयथुकरणविलयनानि ॥ १ ॥

वीर्याणीति वीर्यभेदाः। पुनश्शब्दः पक्षान्तरनिवृत्त्यर्थः। छर्दनं जनयन्तीति छर्दनीयाः। अनुलोमनीयं वैरेचनीयमुभयतोभाग वमन-विरेचनकरम्। प्रशमनीयं प्रवृद्धानां प्रकुपितानां दोषधातुमलानां साम्य-करमित्यर्थः। संग्रहणं पुरीषसन्धानकरम्। दीपनीयमग्नेः सन्धुक्षण वर्धनमिति। प्राणघ्नं मारणं, मदनं मदकरं, प्रदरणं विदारणं शोफानां, श्वयथुजननं शोफकरं, विलायनं शोफानामुत्सेधप्रशमनम् ॥ १ ॥

एतेषां वीर्याणां कस्य क आश्रय इत्याह —

१. 'शमनीय', २. 'सांग्राहिक'. ३. 'प्रदरण' इति पाठभेदाः।

तत्र सर्वान् रसानाश्रित्य छर्दनीयम् ॥ २ ॥

इति। तेषु वीर्येषु सर्वान् मधुरादीन् रसान् शीतादीन् गुणांश्चाश्रित्य वर्तते छर्दनीयं वीर्यम् ॥ २ ॥

तस्य निर्वर्तकं किमित्याह—

तदाग्नेयवायव्यं च ॥ ३ ॥

छर्दनीयं वीर्यमग्निवायुभ्यामुत्पाद्यत इति। अग्नेरूर्ध्वगतित्वाद् वायोर्गतिहेतुत्वान्मधुरादिष्वन्यतमस्मिन् गुणे वा अग्निवायुभ्यामुत्पादितं तद् वीर्यं तेभ्योऽन्यदित्युक्तं भवति। एवं सर्वत्र ॥ ३ ॥

तथानुलोमनीयम् ॥ ४ ॥

तथेति पूर्वमुक्तमाश्रयमाकर्षतीति सर्वान् रसान् सर्वान् गुणांश्चाश्रित्य वर्तत इति ॥ ४ ॥

तत् पार्थिवमाप्यं च ॥ ५ ॥

भवति। पृथिवी गुरुत्वादेवाधो गच्छति। आपो द्रवत्वात् सरणतामुपजनयन्तीति ॥ ५ ॥

वातलांश्च रसान् पित्तलांश्च गुणानुभयतोभागम् ॥ ६ ॥

वातलान् वातजननान् कटुतिक्तकषायान् रसान् पित्तलान् पित्तजननान् तीक्ष्णोष्णलघून् गुणानाश्रितमुभयतोभागम् ॥ ६ ॥

तत्पार्थिवाप्यतैजसवायव्यम् ॥ ७ ॥

तदुभयतोभागं वीर्यं पृथिव्युदकाभ्यां गुरुभ्यामग्निवायुभ्यां लघुभ्यां च निर्वर्तते ॥ ७ ॥

यथाप्रत्यनीकं प्रशमनम् ॥ ८ ॥

यथाप्रत्यनीकमिति प्रत्यनीकं प्रत्याश्रितं प्रशमनं मधुराम्ललवणान् रसान् गुरूष्णस्निग्धपिच्छिलांश्च गुणान् आश्रितं वातप्रशमनम्। तथान्यानि च। अस्य निर्वर्तकस्यावचनं रसगुणैरनुमेयं प्रशमनमिति वक्ष्यति हि। यथा प्रत्यनीकग्रहणादेव सिद्धमिति च पृथिव्युदकाग्निभिस्तद्वीर्यमारभ्यते। एवमन्यत्रापि यथासम्भवं प्रत्यनीकत्वं योज्यमिति ॥ ८ ॥

लवणतीक्ष्णोष्णेभ्योऽन्यत् साङ्ग्राहिकं तत् पार्थिवाप्यवायव्यम् ॥ ९ ॥

लवणादेतद् गुणद्वयाच्चान्यद् रसगुणं तस्याश्रयस्तत् पार्थिवा(प्यवा)यव्यम् एभिर्भूतैर्निर्वर्त्यते साङ्ग्राहिकम् ॥ ९ ॥

पित्तलान् रसान् गुणांश्च दीपनीयम् । तदाग्नेयम् ॥ १० ॥

कटुकाम्ललवणान् रसान् तीक्ष्णोष्णलघून् गुणानाश्रितमिति । तदग्निनैव निर्वर्त्यम् ॥ १० ॥

सर्वान् रसान् तीक्ष्णोष्णरूक्षलघवो विशदाश्च गुणा मदनीयम् ॥ ११ ॥

सर्वान् रसान् मधुरादीन् गुणांश्चाश्रित्य वर्तते मदनीयं वीर्यम् ॥ ११ ॥

तदाग्नेयं वायव्यं च ॥ १२ ॥

अग्निवायुभ्यां निर्वर्तितं तत् ॥ १२ ॥

शैघ्र्यसौषिर्यव्यवायित्वविकाषित्वानि च प्राणघ्नम् ॥ १३ ॥

शैघ्र्यादीन् विशेषगुणान् पूर्वोक्तांश्च सर्वान् रसानाश्रित्य वर्तते प्राणघ्नम् । चशब्दात् ते च संगृहीताः, षड्रसं विषमिति वचनात् । एतदर्थं उद्देशक्रमभेदश्च कृतो वेदितव्यो लाघवार्थमेतेषाम् । विकाषित्वं कथमिति । आह हि —

"उष्णं सूक्ष्मं च तीक्ष्णं च विकाषि विशदं लघु ।
व्यवायि रूक्षं शीघ्रं च विषं नवगुणं स्मृतम् ॥
पापक्ति धातूनुष्णत्वात्तैक्ष्ण्यान्मर्मच्छिदं विषम् ।
सौक्ष्म्याद्धातून् प्रविशति विकाषित्वाद् विसर्पति ॥
विश्लेषयति वैशद्यात् सन्धीन् धावति लाघवात् ।
व्याप्नोति च व्यवायित्वाद् रूक्षत्वात् स्नेहनाशनम् ॥
शीघ्रत्वान्मारयत्याशु विषं गौतम ! षड्रसम् ॥"

इति ॥ १३ ॥

तदाग्नेयम् ॥ १४ ॥

अग्नेर्दहनपचनशक्तित्वाद् अप्कार्यस्य जीवनस्य च प्रतिपक्षत्वात् तत् प्राणघ्नमाग्नेयं भवति । अ.ह —

"षड्रसं विषमाग्नेयं ब्रह्मणः क्रोधसंभवम् ।"

इति ॥ १४ ॥

पित्तलान् रसान् गुणांश्च प्रदरणम् ॥ १५ ॥

पित्तलान् कटुकाम्ललवणान् तीक्ष्णोष्णांश्च गुणानाश्रितम् ॥ १५ ॥

तत् पार्थिवमाग्नेयं च ॥ १६ ॥

पृथिव्यग्निभ्यां निर्मितम् । पृथिवी खलु रौक्ष्यात् तत्रस्थं स्नेहमपास्य पृथिवीपरमाणूनामप्संग्रहमपाकरोति । ततस्तैक्ष्ण्यादग्निर्विकारयति ॥ १६ ॥

अम्लमधुरकषायान् रसान् तीक्ष्णोष्णरूक्षांश्च गुणाञ् श्वयथुजननम् ॥ १७ ॥

मधुरकषायवर्जितान् रसान् तीक्ष्णादीन् गुणांश्चाश्रित्य वर्तते तद् वीर्यम् ॥ १७ ॥

तदाग्नेयं वायव्यं च ॥ १८ ॥

अग्निवायू विश्लेषणं कृत्वोर्ध्वमुद्धूय शोफजननसमर्थौ भवत इति ॥ १८ ॥

सर्वान् रसाञ् शीतमृदुपिच्छिलांश्च गुणान् विलायनम् ॥१९॥

सर्वान्मधुरादीन् रसान् शीतमृदुपिच्छिलानाश्रितं विलायनम् ॥ १९ ॥

तत्सौम्यं पार्थिवं च ॥ २० ॥

अग्निवायुजनितवायुवीर्यनिर्वर्तितत्वात् शोफस्य तस्य विलायनं तत्प्रतिपक्षभूतनिर्वर्तितं भवति ॥ २० ॥

शोधनं पुनरन्यस्य हेतोः प्रयुक्तमप्येकं वानेकं वा शोधयेत् ॥ २१ ॥

शोधनमिति वमनविरेचनास्थापनानि। पुनश्शब्दोऽधिकृतोद्देशपरिसमाप्तिसूचकः। अन्यस्य हेतोः प्रयुक्तमिति श्लेष्महरणार्थं वमनं प्रयुक्तं पित्तं च हरति, पित्तहरणार्थं विरेचनं प्रयुक्तं वातं श्लेष्माणं च हरतीति। अत्रास्य वचने प्रयोजनं वीर्यसामान्येनाधो वा ऊर्ध्वं वापनयति सर्वान् दोषान् धातूंश्च। तत्र यथेष्टकार्यसंपत्तिकरणं प्रयोक्त्रायत्तमिति।

अग्नेर्दहनशक्तिवत् त्वङ्मांसास्थिदाहे रसगुणैरनुमेयं प्रशमनम् ॥ २२ ॥

पूर्वोक्तस्य प्रशमनस्य वीर्यस्य निर्वर्तकं रसैर्गुणैरनुमेयं पूर्वमुक्तक्रमेण। अथवा अत्र प्रशमनं रक्षणं स्वस्थानां दोषाणां क्षयवृद्ध्यवस्थाप्राप्तिप्रशमनं रसगुणैरनुमेयम्। दोषाणां रसैर्गुणैश्चानुमेयम्। अस्य दोषगुणस्य बाह्यो गुणः प्रतिपक्षः। अयमस्य दोषरसस्य बाह्यो रसः प्रतिपक्ष इति ॥२२॥

द्वयोर्निग्रहणं सांग्राहिकम् ॥ २३ ॥

निग्रहणं प्रशमनम्। द्वयोरित्युक्तं न विशेषितं, यथा पित्तश्लेष्मणोरिति गम्यते, पार्थिवाप्यवायव्यत्वात् तस्य वीर्यस्याश्रयस्य च। लवणं तीक्ष्णोष्णेभ्योऽन्यत्वात् पित्तनिग्रहे समर्थं, पार्थिववायव्यत्वाद् रौक्ष्यवैशद्याभ्यां श्लेष्मनिग्रहणे समर्थम् ॥ २३ ॥

अतीसारस्य वातकर्तृकतामिच्छन्ति केचित ॥ २४ ॥

तन्न युक्तं, पित्तकर्तृकता युज्यते, शीतोपक्रमत्वात्,

"ज्वरे चैवातिसारे च पूर्वं पित्तमुपक्रमेत्।"

इत्यागमाच्च। दीपनीयं द्वयोर्वातश्लेष्मणोर्निग्रहणं वेदितव्यम्, आग्नेयत्वादिति ॥ २४ ॥

सर्वप्रकोपनं प्राणहननं मर्दनं प्रदरणं च ॥ २५ ॥

एतानि वीर्याणि सर्वदोषप्रकोपनानि। पूर्वमुपक्रमेण विषे अन्यत्र च यथासम्भवं योज्यम् ॥ २५ ॥

वातपित्तप्रकोपनं श्वयथुजननं विलयनं सर्वेषाम् ॥ २६ ॥

वातपित्तयोः प्रकोपजननं वीर्यं स्वशक्तित एवेत्यत्र दोषैः स्वसंश्रयेवोक्तो विलयनं प्रलयनं केषां विलयनं वीर्यं सर्वेषां दोषाणां प्रलयनं प्रशमनं वातशोफस्य च शमनात् ॥ २६ ॥

अन्यान्यपि वीर्याणि सन्तीति ज्ञापनार्थमाह —

मेध्यायुष्यवयस्यवर्चस्यरक्षोघ्नपुंसवनसौभाग्यविशल्य-विमोक्षोन्मादक्लैब्यवशीकरणविद्वेषणप्रवासनाकर्षणान्तर्धा-निकपौष्टिकराजद्वारिकप्रभृतीनि च ॥ २७ ॥

इति। मेध्यादीनि च वीर्याणि सन्ति। प्रभृतिशब्दादन्यानि च वीर्याणि विद्याधरणामाकाशगमनयथेप्सितार्थनिर्वर्तनजनकानि अचिन्त्यान्यपरिमेयानि च सन्तीति। एतेषामचिन्त्यत्वं स्वयमेवोत्तरत्र वक्ष्यति। चार्थे समासः। मेधाया हितं मेध्यं, वचासुवर्णघृतादीनां वीर्यम्। आयुषे हितम् आयुष्यं, दीर्घायुष्करमिति। यथा—

"मध्वामलकचूर्णानि सुवर्णमिति तत् त्रयम्।
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात् ॥"

इति। अथापि दिव्यानि रसायनानि च। वृषाय हितं वृष्यम्। वयसे हितं वयस्यं, जरामभिहत्य यौवनमभिरक्षति। तच्च रसायनादेवावगन्तव्यम्। वर्चसे प्रभायै हितं वर्णाय हितं वर्चस्यम्। यथा—"आमलकभक्षो ह्यायुष्मान् भवति, दैवताश्चैनमनुकम्पन्ते, गान्धर्वं च वपुर्गमिष्यती" ति। रक्षोघ्नं रक्षांस्यपहन्ति वीर्येण। कृष्णायसप्रभृतीनि विषघ्नानि च। तथा पुंसवनं पुत्रलाभकरम्। यथा —

"लक्ष्मणामूलफलयोर्मूलं पिष्ट्वा रसस्य वा।
नासाया दक्षिणे छिद्रे बिन्दूनष्टौ प्रदापयेत् ॥"

इति। सुभगभावः सौभाग्यं, यं दृष्ट्वा सर्वेषामस्योपरि प्रीतिर्जायते। तस्य हेतुभूतं वीर्यम्। यथा—

"गोवन्दना मोहनिका मधुकं माक्षिकं मधु।
सुवर्णमिति संयोज्य पेया सौभाग्यमिच्छता ॥"

इति। विशल्यकरणं शल्यस्यार्पितस्य निष्क्रामणम्। यथा—अयस्कान्तोऽयश्शल्यस्य। विमोक्षकरणं निगलभञ्जनम्। आलेपमात्रेण निगलानि भज्यन्ते। उन्मादकरणं यथा —

"कृकलासस्य मांसानि मधुना सह योजयेत्।
तदन्नपाने भक्ष्ये वा दत्तमुन्मादयेन्नरम् ॥"

इति। क्लैब्यकरणं पुंस्त्वविनाशनम्। वशीकरणं स्त्रीणां पुरुषाणां वा आत्मसात्करणं लोकप्रसिद्धम्। विद्वेषणं परस्परप्रीतिविभेदनम् औषधविशेषेण मन्त्रविशेषेण च। प्रवासनं देशान्निर्वासनम्। यथा—

"केशा नकुलरोमाणि सर्पनिर्मोचनी वचा।
किण्वं च वृश्चिकाली च पदे यस्य निखन्यते॥
न तिष्ठते सप्तरात्रं शपामि ब्रह्महत्यया॥"

इति। आकर्षणं दूरस्थानां नारीणामाह्वानम् औषधवीर्येण। अयस्कान्तश्चाकर्षति। वृक्षस्थानि च फलान्याकृष्यन्ते। अन्तर्धानिकम् अदृश्यरूपजनकमौषधकं हस्ते गृहीत्वा बद्ध्वा वा नष्टच्छायारूपश्चरति। पौष्टिकं लाभकरं श्रीसूक्तं नाम विद्या, तया सहस्रं लभते। राजद्वारिकं राजवश्यं,

"शतावरीघृतं नित्यमुपयुज्य पुनः पुनः।
सक्षौद्रं (स) सुवर्णं च वशे स्थापयते नृपम्॥"

इति ॥ २७ ॥

एतानि वीर्याण्यचिन्त्यानीति प्रदर्शयति —

**रसगुणभूतसमुदायाश्रय एषामनवधारणीयः तथारसगुणभूतसमुदायानामन्येषामन्यथावीर्यत्वात् ॥ २८ ॥**

एषां वीर्याणां मेध्यादीनां, रसगुणभूतसमुदायाश्रय इति। रसाश्च गुणाश्च भूतसमुदायश्च रसगुणभूतसमुदायाः, त एवाश्रय इति न ज्ञायते। इदं मेध्यादिवीर्यम्, इममेव रसं गुणं वा भूतसमुदायं वाश्रित इति ज्ञातुं न शक्यते। कुत इति। तथा रसगुणवीर्यत्वात्। तथारसगुणभूतसमुदायानामिति। तत्तुल्यरसानामिति। अन्येषां द्रव्याणामन्यथावीर्यत्वात्। यथा सुवर्णं लघु शीतं कषायं मेध्यमन्यत् तादृग्विधमप्यमेध्यं च दृष्टमिति चिन्त्यानामपि वीर्याणामेते दृश्यन्ते। यथा मधुरकषायतिक्तं स्निग्धं पिच्छिलं मदनफलं वामयति, कषायमधुराः सतिक्ताः स्निग्धा उष्णास्तिला न वामयन्ति। उक्तं हि—

"मधुकं सकषायतिक्तकं
न तु रूक्षं सकटूष्णपिच्छिलम्।

कफपित्तहृदाशुकारि चा-
प्यनपायं पवनानुलोमि च ॥"
फलानामविशेषस्ततो लभते अन्येषु सत्स्वपीति।
ईषत्कषाया मधुराः सतिक्ताः
साङ्ग्राहिकाः पित्तविवर्धनाश्च।
वृष्याश्च बल्याश्च तथोष्णवीर्याः
स्निग्धास्तिला सर्वश एव दृष्टाः ॥"

इति। तस्मादन्यथावीर्यत्वमेव चिन्त्येष्वपि विद्यते तिलेषु तद्वीर्यमूर्ध्वभागिकं नारब्धव्यमग्निवायुभ्यामतो न वामयन्तीति चेदत्रापि तद्वीर्यमेध्यं नारब्धमिति शक्यं वक्तुमिति तुल्यत्वान्न किञ्चिदेतदिति। तथाप्यस्त्यत्र विशेषः। अत्रोर्ध्वभागिकं वीर्यमग्निवायुभ्यां निर्वर्त्यते, तयोरूर्ध्वगतित्वात्। ताभ्यामत्रारब्धमिति शक्यमवधारयितुम्। अत्र या मेधा सैव न ज्ञायते कस्य भूतस्य गुणः (इति), वशीकरणत्वं वा कस्य भूतस्येति न निर्धार्यत इति। अथवा तथा रसगुणभूतसमुदायानामिति। यथा रसगुणभूतसमुदायान्यचिन्त्यवीर्यद्रव्याणि, तथारसगुणभूतसमुदायानां तत्तुल्यरसगुणभूतसमुदायानामिति। अन्येषां चिन्त्यवीर्याणां द्रव्याणामन्यथावीर्यत्वात्। तस्मादेवं भूतभौतिकक्रमेणाचिन्त्यान्येतानि वीर्याणीति जानीम इति ॥ २८ ॥

समन्त्राणि पुनरेषां कानिचित् ॥ २९ ॥

एषां वीर्याणां कानिचिद् अन्तर्धानिकवशीकरणपौष्टिकादीनि, कानिचित् समन्त्राणि भवन्तीति। मन्त्रतत्त्वं चाचिन्त्यकारणमेव, भूतसमुदायाभावात् ॥ २९ ॥

कथमिदानीं निर्धार्यन्त इति —

कर्मणानुमेयासंपत्तिः ॥ ३० ॥

कर्मणा फलेनानुमेया इति। एवं वीर्यं परीक्षितं चिन्त्याचिन्त्यभेदेन। तत्राचिन्त्यानि प्रभृतिशब्देनोक्तत्वाद् बहूनि गम्यन्ते। एतानि किं चिन्त्यान्यपि वीर्याणि छर्दनीयादीनि विलयनान्तान्येवाहोस्विदन्यान्यपि सन्तीति, तन्त्रेषु तस्मान्नोक्तानीति। अनेनैवाप्यूह्यत्वान्नोक्तानीति। उक्तानि निमिना —

"अम्भूमिजमधोभागं तेजोवायुजमूर्ध्वगम् ।
तथैवोभयतोभागं मह्यग्न्यनिलजं मतम् ॥
साङ्ग्राहिकं विजानीयात् पृथिव्यनिलसम्भवम् ।
वायुसोममहीजातं तथा संशमनं विदुः ॥
पृथिव्यनिलबाहुल्याद् दीपनं परिचक्ष्महे ।
पृथिव्यपां गुणैर्युक्तं जीवनीयमिति स्थितिः ॥
वाय्वनलस्वभावाच्च प्राणघ्नं मदनं मतम् ।
प्राणघ्नं तीव्रभावात्तु दोषधातुप्रकोपनम् ॥
मदनं चलधातुत्वाद् दोषकोपनमेव तु ।
अपां गुणबहुत्वात्तु शीतीकरणमिष्यते ॥
भूम्यब्जं शोफकृद् विद्धि शोफघ्नं च खवायुजम् ।
अग्नेस्तु गुणबाहुल्यात् पाचनं परिचक्ष्महे ॥
दारणं मारुताग्नेयं रोपणं भूजलानिलम् ।
एवमेतानि प्रोक्तानि यथावदनुपूर्वशः ॥
दश पञ्च च कर्माणि गुणानां पाञ्चभौतिकात् ।
द्रव्येष्वेवं विजानीयात् कर्माणि दश पञ्च च ॥"

इति ॥ ३० ॥

अतः परं विपाकचिन्ता —

यथारसं विपाकमेके ब्रुवते ॥ ३१ ॥

यथारसं, मधुरो मधुरं पच्यते कटुकः कटुकं पच्यत इत्येवमादि । एवमेके आचार्या मन्यन्ते ॥ ३१ ॥

न, भिन्नलक्षणत्वात् ॥ ३२ ॥

नायं पक्षः साधुः । कुतः, भिन्नलक्षणत्वात् । आस्वादग्राह्यो रसः, परिणामलक्षणो विपाक इति । विपाकस्य मधुरता कथमास्वाद्यते । यद्यास्वाद्येत, रसलक्षणत्वाद् रस एवेति विपाकाभावः । यदि नास्वाद्येत, कथं भवता मधुरो मधुरं पच्यत इत्युपलब्धमित्युक्तं भवति ॥ ३२ ॥

एवमुक्ते परस्त्वाह —

विपाकद्वयपक्षेऽप्ययं प्रसङ्गस्तुल्यः ॥ ३३ ॥

कथमिति। मधुरः कटुक इति द्वौ शब्दौ रसस्यास्वादग्राह्यस्य वाचकौ। कथमास्वादेन विपाको गृह्यते, भिन्नलक्षणत्वादिति ॥ ३३ ॥

एवमुक्ते यथा रसविपाकप्रतिषेधिना मधुरकटुकशब्दाभ्यामस्माभिर्न रसौ परिगृहीतौ, चिरादचिरादिति द्वौ कालौ परिगृहीतावित्युक्ते परः प्राह—

किमस्माकमपि रसशब्दानां कालवाचकत्वे प्रतिषेधो विद्यते ॥ ३४ ॥

तस्मादत्रापि कालवाचका रसशब्दा इति ॥ ३४ ॥

अत्राह —

शब्दान्तरेण कालस्य ग्रहणमिति चेत, कतमे षट् कालाः ॥ ३५ ॥

इति। शब्दान्तरेण कालवाचकादन्येन रसवाचकेन शब्देन। यदि कालः परिगृहीत इति। कतमे षट् कालाः, न सन्तीत्युक्तं भवति। अस्माकं पुनर्विद्येते द्वौ कालौ चिरादचिरादिति ॥ ३५ ॥

तथा गुणाः ॥ ३६ ॥

इति। शब्दान्तरेण गुणा गृह्यन्ते। यथा मधुराख्यो गुरुः पाकः, कटुकाख्यो लघुरिति। तच्च नोपपद्यते। गुणमुखेनापि कालषट्कस्यासम्भवादिति ॥ ३६ ॥

रसस्यैवेति चेत्, केनचित् कथञ्चित् कस्यचिच्च विपाकादसम्यक् ॥ ३७ ॥

अयं तावन्मधुर शब्दस्त्वदीये पक्षे न गुणवाचकः कालवाचको वा तस्मान्मुख्य एव रसवाचकः स्यादिति चेन्, अस्माभिर्मुख्याभिधाने शब्दस्यासम्भवान् दृष्ट्वा गुणपक्ष आश्रित इत्युक्तं भवति। अनेन वाचकेन कथमसम्भव इति। केनचिद् विपाकाद् रसेन भवति। अन्येनाग्निना भवति। एतदुक्तं भवति—अग्निसान्निध्यादग्निपाकः प्रवर्तमानः कथं जिह्वेन्द्रियसन्निकर्षग्राह्यरसार्थवाचकेन शब्देन मधुरमधुर इत्युच्यते। तस्मान्नात्र मुख्यशब्दार्थकल्पना युक्ता। कथञ्चिद् विपाकाच्च न रसस्यैव वाचको मधुरशब्दः। विपाकः प्रकारेण गुरुलघ्विति कथ्यते। प्रकारः कालापेक्षया चिरादिति। एवमन्यकारापेक्षस्यार्थस्य विपाकसंज्ञकस्य कथं

रसशब्देन मुख्यवचनं भवति, कस्यचिच्च विपाकात्। न रसशब्द-वाच्यं यस्यकस्यचिद् भवति। द्रव्यस्य वा पाकः रसस्य वा गुणस्य वा वीर्यस्य वा द्रव्यरसगुणवीर्याणां विपाक इति वचनात्। तस्मादेवमन्य-पदार्थवर्तिना क्रियायां रसशब्दस्य मुख्यस्य प्रवृत्तिरुपपद्यत इति मधुर-कटुकशब्दाभ्यां रसवचनमसम्यगिति ॥ ३७ ॥

एवं प्रसङ्गागतमपोह्य इदानीमपि यथारसत्वे विपाकस्यासम्भवं प्रदर्श-यन्नाह—

एकोपयोगे वानेकोपलब्धेः ॥ ३८ ॥

इति। एकरसस्य मधुरस्य कटुकस्य वा उपयोगे अनेकस्य भिन्नस्य विपाकस्योपलब्धेर्न यथारसं विपाकः। यथामधुरं क्षीरं मधुरविपाकं मधुरं घृतं कटुकविपाकं कटुका पिप्पली मधुरविपाका। यदि यथारसं विपाकः स्यात् मधुरेण घृतेन मधुरविपाकेन भवितव्यं, यथा पिप्पल्यापि कटुकविपाकया भवितव्यमिति ॥ ३९ ॥

अयं चापरो हेतुः यथारसविपाकपक्षबाधकः —

परोक्षत्वाच्चात्यन्तम् ॥ ३९ ॥

इति। अक्षाणां परतो वर्तत इति परोक्षं, परिणामकाले रसानां कथमुपलब्धिर्भवत्यन्यत्र वर्तमानत्वादिति। तस्यां रसानामनुपलब्ध्यां कथं यथारसत्वं ज्ञायत इति। भिन्नलक्षणत्वादिति। अनेनैवास्यार्थस्य सिद्धेरिदं वाक्यान्तरं नारब्धव्यमिति। अस्त्यत्र स विशेषः। कथमिति। न भिन्नलक्षणत्वादित्यनेन विपाकरसयोरेकत्वमेवेति। यथारसत्वे विपाकस्य परिकल्प्यमाने उभयोरास्वादग्राह्यत्वादिति। तस्माल्लक्षणभेद-दर्शनान्नास्त्येकत्वमिति। परोक्षत्वादित्यनेन रसनेन्द्रियग्राह्यस्य विप(य) भावमेव नोपगच्छति विपाकः। कथं तस्य रसस्य भेदः परिच्छिद्यत इति ॥ ३९ ॥

विपाकं प्रत्यन्यं पक्षान्तरमाह —

यथास्वं दोषवर्धनात् त्रय इत्येके ॥ ४० ॥

इति। यथास्वं दोषवर्धनाद्, यथा मधुरो मधुरं श्लेष्माणम् अम्लोऽम्लं पित्तं कटुकः कटुकं वायुमिति ॥ ४० ॥

त्रित्वप्रतिषेधार्थमिदमुच्यते —

न, क्षीरादानां बालानां सर्वदोषप्रकोपात् ॥ ४१ ॥

इति। त्रयो विपाका इति नोपपद्यन्ते। कुत इति। हेतोरसम्भवात्। यथास्वं दोषवर्धनादित्ययमसिद्धः, क्षीरादानां बालानां मधुरविपाकं क्षीरमेवोपयुञ्जानानां त्रयोऽपि दोषाः प्रकुप्यन्ति। तस्मादेकेन विपाकेन त्रयोऽपि दोषाः प्रकोपमुपजनयन्तीति विपाकनिमित्तः प्रकोपो न स्यात्। *सर्वत्रेति विपाकत्रयवादी प्राह। सर्वप्रकोपस्तत्रैकदोषप्रकोपादिति क्षीरपस्य सर्वदोषप्रकोपो न विपाकनिमित्तः। अत्र सर्वशब्दः शेषसाकल्यवाची। एकस्यैव श्लेष्मणः प्रकोपाद् भवति।

"एकश्च दोषः कुपितः सर्वानेव प्रकोपयेत्।"

इति ॥ ४१ ॥

अत्रोत्तरं —

न, प्रकोपदर्शनात् पर्यायेण ॥ ४२ ॥

यदि कुपितदोषघट्टननिमित्तः स्यात् शेषदोषप्रकोपः, सर्वकालं श्लेष्मप्रकोपपूर्वक एव स्यात्। एवं न भवति, पर्यायेण भवति। पर्याय आत्मनः पर्यायक्रमः। कदाचित् पित्तस्यैव कदाचित् वायोरेवेति। तस्मादेकप्रकोपान्न युक्तमिति ॥ ४२ ॥

एवं पूर्वक एवासिद्धदोष इति व्यवस्थिते पर आह —

तत्रोपहतत्वाद् विपर्ययः पाकस्य ॥ ४३ ॥

इति। तत्र पर्यायेण प्रकोपे उपहतत्वाद् दुष्टत्वाद् विपाकस्य। मधुरविपाकं क्षीरं धात्र्यास्त्वपचारैर्दूषितमाम्लविपाकं कटुकविपाकं वा भवति। तदा यथास्वं दोषवर्धनत्वमेव भवति। तस्मात् त्रय एव विपाका इति ॥ ४३ ॥

अस्मिन् पक्षेऽन्यथा दोषमुद्भावयति —

संसृष्टस्यानुपपत्तिः ॥ ४४ ॥

इति ॥ ४४ ॥

कथं संसृष्टस्यानुपपत्तिरिति —

प्रचितस्य प्रकोपादेकेन चानेकस्याप्रचयात् प्रतिज्ञाहानिर्वा सति प्रचये ॥ ४५ ॥

---

* सर्वत्रैकदोषप्रकोपादितीव पाठः सम्भाव्यते।

इति। प्रचितो हि दोषः प्रकोपं गच्छति। एकैकविपाके-ऽनेकस्याप्रचयात् प्रचयासम्भवादित्यर्थः। दुष्टेन हि क्षीरेणाम्लेन कटुकेन विपन्नमाधुर्येण वा भवितव्यम्। नहि युगपत् कटुकापत्तिः। तस्मादेकस्यैव प्रचयहेतुसम्भवः। यथास्वं दोषवर्धनादिति प्रतिज्ञानादेव-मुक्तमप्रचयादिति। एवमसम्भवं दृष्ट्वा एकेनैव विपाकेनान्यास्यापि दोषस्य प्रचयो भवतीति मतं स्यात्। तत्र प्रतिज्ञा हीयते पूर्वम् ॥ ४५ ॥

यथास्वं दोषवर्धनात् प्रशमनाभावः ॥ ४६ ॥

यदि त्रयो विपाकास्त्रयाणां दोषाणां वर्धनप्रयोजना विपाकनिमित्तं दोषप्रशमनं न स्यात्। किं जातमन्यैर्गुणरसवादिभिः। प्रशमनं भवतीति चेत्। शास्त्रोपुक्तस्य प्रशमनस्याभाव इति शास्त्रेण विरोधः प्रदर्शितो भवति। यथा मधुरं शीतं स्निग्धं सर्पिः श्लेष्माणं शमयति, लघुविपा-कत्वादिति ॥ ४६ ॥

पूर्वपाक्षिकस्त्वाह —

कस्मात् प्रशमनं नास्त्यस्त्येव प्रशमनम् ॥ ४७ ॥

यथेति मधुरविपाकेन पित्तस्य प्रशमनमाम्लेन वायोः कटुकेन श्लेष्मण इति ॥ ४७ ॥

अत्राह —

सति वा प्रशमने यथास्वं दोषवर्धनं न भवति ॥ ४८ ॥

इति। एवं प्रशमने परिकल्प्यमाने वर्धनं न स्यादिति। अत्र पूर्वपाक्षिकस्य वचनावकाशो विद्यते कस्मादुभयकर्तृकत्वमेकस्य विपाकस्य न भवति, रसस्यैव। यथा मधुरो रसः श्लेष्माणं वर्धयति पित्तं शमयति, तद्वन्मधुरविपाकोऽपि श्लेष्माणं वर्धयति पित्तं शमयति। वर्धनात् त्रय इत्युच्यन्ते शमनाच्च त्रय इति। कस्मान्न भवति विशेषहेत्व-भावादिति। अस्योत्तराभासस्य प्रदर्शनार्थमुक्तमिति। केचिदत्राप्यस्त्येव वचनावकाशः। कस्मात्। मधुरस्य श्लेष्मवर्धनात् पित्तशमनाच्च भेदो न स्यादिति। तस्मादेतत् सति वा प्रशमने यथास्वं दोषवर्धनं नास्तीति वाक्यार्थास्य न भवतीत्यपोह्यते। कश्चिदिति ॥ ४८ ॥

एवं परस्य हेतुदूषणं कृत्वा विपाकद्वित्वसाधकानां हेतूनां त्रित्वसाधकत्वे भावं दर्शयन्नाह —

कालतो गुणतो रसतश्चानुपपत्तिः त्रित्वस्य ॥ ४९ ॥

इति । कालतस्त्रित्वं नोपपद्यते, चिराचिरकालव्यतिरिक्तस्याभावात् । पूर्वं कतमे षट् काला इत्यत्र कृतभाष्यम् । गुणतश्च त्रित्वं नोपपद्यते, गुरुभूतजनिता लघुभूतजनिता इति गुणद्वैविध्यादिति । रसतश्च त्रित्वस्यानुपपत्तिः, कटुकतिक्तकषायास्तु लघवो गुरवः परे इति द्विविधभेदावरोधादिति । रसत इत्यस्यायमर्थो न भवति, गुणत इत्यत्रैवावरोधात् । तस्मादन्यथा वर्ण्यते । यथास्माकं मधुरकटुकशब्दौ रसवाचकौ मुख्यौ गुणवृत्त्या विपाकेऽध्यारोपितौ, तथाम्लशब्दस्य विपाकेऽर्थान्तरेऽध्यारोपयितुं न शक्यते गौरवाभावादिति हेत्वभावो "मधुरो गौरवाल्लघुत्वाच्च कटुक" इत्यस्य वाक्यस्य भाष्ये प्रदर्श्यते ॥४९॥

इदानीं विपाकस्य स्थितिपक्षं प्रदर्शयन्नाह —

द्वौ द्वैविध्यदर्शनात् परिणामस्य ॥ ५० ॥

द्वैविध्येन दर्शनात् परिणामद्वैविध्येन दर्शनात्, परिणामस्येति, द्वौ विपाकौ, द्वैविध्येन दर्शनादिति द्विधा दर्शनात् तस्य परिणामस्य । पाकस्येति वक्तव्ये परिणामग्रहणं दृष्टान्तवाक्यत्वादस्य विपाकलक्षणस्य परिणामार्थान्तरभावगमनस्य द्वैविध्येन लोके दर्शनात् । यथा खदिरसारादिश्चिरादग्निसंयोगे परिणामं गच्छति, पलालादीन्यचिरादिति ॥ ५० ॥

इदानीं हेतुः—

गुणकारणत्वाद् गुणद्वैविध्याच्च ॥ ५१ ॥

इति । इह पाकस्य कारणभूता गुरवश्चिरात्पाकस्य कारणं लघवोऽचिरात्पाकस्येति गुणद्वैविध्यं, भूतानां द्वैविध्यात्, पूर्वे गुरूणी पराणि लघूनीति । न तृतीयः पाकः, तत्परिच्छेदकालाभावात् । यत्र यस्य परिच्छेदकं नास्ति, तस्याभावो दृष्टः । तद्यथा — द्वितीयमनीश्वरशिर इति । अथवा द्वौ विपाकौ, तत्कारणद्वैविध्यात् । यत्र कारणद्वैविध्यं तत्र कार्यद्वैविध्यं दृष्टम् । यथा गोशृङ्गयोः । वैधर्म्यं खड्गशृङ्गं योज्यम् ॥ ५२ ॥

गुणकारणत्वाद् द्वैविध्यमित्युक्तं, तत्र कस्य विपाकस्य को गुणः कारणमिति न ज्ञायते इत्यत्राह —

मधुरो गुरुत्वाल्लघुत्वाच्च कटुकः ॥ ५२ ॥

इति। मधुरशब्दवाच्यो गुरुगुणनिमित्तः। कटुकशब्दवाच्यो लघुगुणनिमित्तः। अत्र द्रव्यादयः षट् पदार्था उद्दिष्टाः साधनभूताः। तेषु विपाकस्य लक्षणमुपदिशता परिणामलक्षणो विपाक इति विपाकस्तस्य लक्षणमुक्तम्। तस्य भेदमुपदिशता मधुरः कटुक इति रसभेद उक्तः। मधुरकटुकशब्दयोरर्थतत्त्वाभिधाने गुणभेद उक्तः, तयोर्मधुराख्यलघुरिति। एवं सर्वत्र मुख्यशब्दार्थलङ्घनं कृतं रसशब्देन गुणाभिधानं गुणशब्देन परिणामाभिधानमिति। उच्यते। त्रिविधा हि शब्दाः— नित्यमेव गौणा नित्यं मुख्या गौणमुख्याश्चेति। प्रवीणकुशलादयः शब्दास्तु गौणा एव। पचति पठतीत्यादयो मुख्या एव। सिंहादयस्तु गौणाश्च मुख्याश्च। मृगे सिंहशब्दो मुख्यः। सिंहोऽयं माणवक इति गौणः। इहापि मधुरशब्दो रसे मुख्यः, गुणे गौणः, यत्नोपपाद्यत्वात्। साक्षादास्वादग्राह्यो इहाप्रवृत्तेः कुत्साप्रशंसादिगुणसारूप्यात् सिंहशब्दादिषु भवन्ति। अत्र कथम्। अत्राप्यस्ति सारूप्यमेकहेतुजन्यत्वं— मधुरोऽपि पार्थिवाप्यो गुरुरपि गुणः पार्थिवाप्य इति। तथा गुणशब्दोऽपि परिणामे गुरुर्लघुरिति। गौणगुरुगुणजनितः परिणामे गुरुरित्युक्तः, लघुगुणजनितो लघुरिति। आह च—

"गुणमात्रेण य(था ? त्रा)स्य तादर्थ्यमवसीयते।
तन्मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम्॥"

इति॥ ५२॥

"यथास्वं दोषवर्धनात् त्रयः" इत्यत्र तेषां वर्धनं नैयम्येनोक्तं, किमत्र द्वयोरपि पाकयोर्वर्धनादिनियमो विद्यत इत्याह —

वर्धनक्षपणप्रशमनप्रकोपेषु तयोरनियमः॥ ५३॥

इति। एतेषु दोषाणां वर्धनादिषु द्वयोर्विपाकयोर्नियमो नास्ति। अत्र वर्धनं सञ्चयः। लघुविपाकः क्वचिद् वर्धयति। यथा लघुविपाकमुदकं श्लेष्माणं वर्धयति। लघुविपाकं मधु श्लेष्माणं हरतीति। तस्मादयमेव गुरुविपाको वर्धन एव लघुविपाकः शमन एवेति नियमो नास्ति। अथवा लघुविपाकः श्लेष्माणं शमयति। तथा गुरुविपाकोऽपीति॥ ५३॥

गुणकारणत्वं कथं भवतीत्याह —

मधुरो गुरुभ्यां कटुर्लघुभिः॥ ५४॥

इति । मधुरो विपाको गुरुभ्यां पृथिव्युदकाभ्यां भवति, कटु-लघुभिरिति त्रिभिरग्न्यादिभिर्भवति । एवं भूतैरभिव्याप्तिर्यमाने पाके तद्गुणसमावेशाच्चिराद्चिराच्चेति विशेषो भवतीति । आह च—

"आप्यस्य पच्यमानस्य यस्यापां धातुरुत्तमः ।
निर्वर्तते पार्थिवश्च तस्य पाको ध्रुवं गुरुः ॥
आपो निर्वर्तमाना हि मृदुं कुर्वन्ति पावकम् ।
पृथिवी रसधातुश्च तस्मात् पाकस्तयोर्गुरुः ॥
एतत्तु गुरुपाकानां द्रव्याणां पाकलक्षणम् ।
अत ऊर्ध्वं प्रवक्ष्यामि लघुपाकं यथा भवेत् ॥
हीनश्च पृथिवीधातुर्विविक्ताश्चाप्गुणाः स्मृताः ।
यस्मिन् द्रव्ये भवन्त्येवं तस्य पाको ध्रुवं लघुः ॥"

इति ॥ ५४ ॥

इदानीं विपाकयोर्विपर्यासप्राप्तिहेतवोऽभिधीयन्ते —

द्रव्यप्रमाणसंस्कारसात्माग्निबलाबलदेशकालसंयोग-पाकविशेषैर्विपाकविपर्यासः ॥ ५५ ॥

द्रव्यप्रमाणाद् विपर्यासः—गुरुविपाकं क्षीरमल्पं लघु पच्यते, लघ्वतिप्रमाणात् गुरु पच्यते । यथा शालिरतिभुक्तः । संस्काराद्—गुरुविपाकं द्रव्यं दीपनीयसंस्काराल्लघुविपाकं भवति । सात्मतः—क्षीरोचितानां क्षीरं लघुविपाकं भवति । अग्निबलात्— तीक्ष्णाग्नीनां गुरुविपाकं लघुविपाकं भवति । देशविशेषात्— जाङ्गलेषु गुरुविपाकाश्च लघवो भवन्ति प्रायशः, अनूपेषु लघुविपाकाश्च गुरुविपाका भवन्ति । कालविशेषाद्—ग्रीष्मे लघवो भवन्ति गुरवः । वर्षाहेमन्तयोर्लघवोऽपि गुरवः । संयोगविशेषात्—क्षीरं शुण्ठीसंयोगाल्लघुविपाकं भवति । संस्कारसंयोगयोः कः पुनर्विशेष इति । संस्कारो भावना । परि-शोषणमन्थनादिपाकविशेषाद् — दग्धं विदग्धं वा द्रव्यमुपयुक्तं गुरु विपच्यते लघ्वपि । क्षीरं गुर्वपि शृतं लघु भवतीति ॥ ५५ ॥

इदानीं षष्ठस्य कर्माख्यस्य पदार्थस्यावसरे प्राप्ते तत्र परीक्षितव्यं नास्ति, शास्त्र एव विस्तरतो व्याख्यातमिति —

कर्म विस्तरेणोपदिष्टं शास्त्रे ॥ ५६ ॥

इति ॥ ५६ ॥

इदानीं तत्र किञ्चिदवशिष्टं क्वचित् क्वचित् परीक्षि(तम्) इत्याह —

न समश्नीयाद् विरुद्धगुणरसवीर्यविपाकानीत्येके ॥ ५७ ॥

एके पुनराचार्या विरुद्धरसानि च विरुद्धगुणानि च विरुद्धवीर्याणि च विरुद्धविपाकानि च द्रव्याणि न समश्नीयाद् युगपन्नाश्नीयादिति ॥ ५७ ॥

नायं पक्षः साधुः। कुत इत्याह —

न, तेषां समशनेनारोग्यदर्शनादिति ॥ ५८ ॥

तेषां विरुद्धरसादीनां समशनेनारोग्यदर्शनात्। षड्समाहारमुपयुञ्जानानामारोग्यं दृश्यत इति। अनेन वाक्येन प्रतिद्वन्द्विमात्रं विरुद्धलक्षणं न भवतीति प्रतिविध्यते ॥ ५८ ॥

एवं सति किं पुनर्विरुद्धलक्षणमित्याह —

विरुद्धप्रत्यनीकं पुनर्विरोधि। तद्विपर्ययेण विरोधी युक्तः। विरुद्धप्रत्यनीकमप्यस्ति युगपदनुपयोज्यम् ॥ ५९ ॥

इति। प्रत्यनीकं प्रतिपक्षभूतमुष्णस्य शीतं गुरोर्लघुरित्यादि। तत्सर्वं शास्त्रे विरुद्धसंज्ञया न व्यवह्रियते। तच्च प्रतिपक्षभूतं द्विविधम् (अ ?) विरुद्धं प्रतिपक्षमिति। द्वयोर्हि प्रत्यनीकं विरुद्धप्रत्यनीकमित्यर्थः। अविरुद्धमपि विद्यते प्रतिपक्षम्। यथा—क्षीरं घृतं च गुरुविपाकापेक्षया प्रतिपक्षं, तथापि न विरुद्धं, युगपदुपयुज्यते—क्षीरं मत्स्यं च शीतोष्णवीर्यत्वाद् विपक्षभूतम् विरुद्धप्रत्यनीकं, युगपन्नोपयुज्यते। यद्येवं केन विरोधः। आरोग्येण। आरोग्यविरोधि वीर्यान्तरोत्पादनं विरुद्धमित्यवगन्तव्यम्। यद्येवमपथ्यं विरोधि सर्वं स्यादिति। सत्यमेवमेतत्। शास्त्रेष्वपि तथैवोच्यते विरुद्धाजीर्णभोजनादिति ।। ५९ ॥

इदानीं विरुद्धलक्षणस्यापवादार्थमाह अविरुद्धप्रत्यनीकमप्यस्ति —

एकरसगुणवीर्यविपाकान्यपि कानिचिन्न समश्नीयात् स्वभावाद् ॥ ६० ॥

एकरसादीन्यपि द्रव्याणीति । तुल्यरसगुणान्यपीतीत्यर्थः । न समश्नीयात् युगपन्नाश्नीयात् । स्वभावाद् द्रव्यस्वभावात् । यथा (रु ? उ) दकं तुल्यघृतम् । भिन्नरसगुणाद् यानि अतुल्यरसादीन्यपि च द्रव्याणि । कानिचिद् विरुद्धवीर्यजनकानि भवन्ति । तस्मात् तान्यपि न समश्नीयात् इति । यथा मूलकं पयश्चेति । एवं भिन्नरसगुणादित्वं तुल्यरसगुणादित्वं च न कारणम् । द्रव्यस्वभावादेव । द्रव्याणि संयुक्तानि आरोग्यविरुद्धवीर्योत्पादकानि भवन्तीत्युक्तं भवति । तस्माद् द्रव्यविरोध एव, न रसादयः परस्परविरुद्धा इति ज्ञापितं भवति । यथा लोकेऽपि शीतः स्फटिकः सूर्यसंयोगादग्निहेतुर्भवति, शीतश्चन्द्रकान्तमणिश्चन्द्रसंयोगादुदकहेतुर्भवति । तस्माद् द्रव्यसंयोगादर्थान्तरनिर्वृत्तिर्भवतीति शास्त्रत एव विरोधाविरोधित्वमवगन्तव्यमिति ॥ ६० ॥

किमेते द्रव्यादयः पदार्थाः प्रत्येकमनारोग्यकारणम् उत समुदिता इत्याह—

आरोग्यनिवृत्तिस्तेषां समुदयात् ॥ ६१ ॥

इति । तेषां विरुद्धद्रव्याणां समुदयात् संयोगादनारोग्यं भवतीति ॥ ६१ ॥

इदानीमाहारस्य बाह्यप्राणसंज्ञितस्य महाभैषज्यस्य प्रतिदिनप्रयोगार्हस्यानुपानं कथमित्याह —

आहाररसगुणवीर्यविपाकात् पुनर्विमृश्यानुपानं प्रयुञ्जीत यथायोगम् ॥ ६२ ॥

इति । आहारस्य रसादीनपेक्ष्यानुपानं प्रयुञ्जीत । यथायोगं यथार्हम् । आहारस्य रसानुकूल्येन गुणानुकूल्येनेत्यादि । अन्वर्थपानमनुपानम् अनुगुणं वा पानमनुपानम् । पश्चादर्थोऽयमनुशब्दः । तत् पुनः षट्प्रकारं ( तत्पुन ? )मनुपानम् । पुनःशब्दोऽप्यनेकधा भिन्नोऽपीति भेदाकाङ्क्षं षड्विधं भवति । तद्यथा — आहारसात्म्यमाहारवीर्यघ्नम् आहारानुलोमनम् आहारविपर्ययमाहारशोधनम् आहारप्रजरणीयमिति । तत्राहारसात्म्यं घृतस्योदकं मधुनः शीतम् । वीर्यघ्नं खदिरोदकमाजस्य । अनुलोमनं सौकरस्य आम्ललवणं, श्लेष्मलत्वात् सौकरस्य । इदमपि श्लेष्मलत्वानुकूल्यात् प्रशमनं भवतीति केचित् । श्लेष्मक्षीणस्य बृंहणार्थं यदि स्यात्, तत्र कार्यमिति । विपरीतं लवणोदकं पिष्टमयस्य ।

त्रिएमयं धातकं, तस्य प्रत्यनीकत्वात् । आहारशोधनमानुपानामासवाः, वैरेचनानाम् आहारप्रजरणीयं, दीपनीया आसवा इति ॥ ६२ ॥

प्रयुञ्जानश्चापेक्षणीयान्यपेक्षेत ॥ ६३ ॥

अनुपानादि प्रयुञ्जानः अपेक्षणीयानि प्रकृत्यादीन्यपेक्षेत ॥ ६३ ॥

तद्द्रव्यस्याभावे किं कुर्वीत । द्रव्यस्य तस्मिन् काले देशे वा अभावे वर्णतः ब्राह्मणादीनां धर्मप्रतिषेधे वा ।

अन्यद् द्रव्यं तद्रसगुणवीर्यसमुदायमुपयुञ्जीत ॥ ६४ ॥

तत्तुल्यमित्यर्थः । तद्रसगुणागुणमिति उष्णमुष्णवत् समुदयं द्रव्यमिति तुल्यरसगुणवीर्यवद् द्रव्यं ग्राह्यमिति ॥ ६४ ॥

इदानीमपि प्रतिनिधिप्रयोगेऽपि विशेषान्तरं दर्शयन्नाह —

तीव्ररसगुणवीर्यस्यालाभे बहूनामल्परसगुणवीर्याणा समुदयं सदृशानाम् ॥ ६५ ॥

इति । यत्र प्रयोगे तीव्ररसगुणवीर्यमेकं द्रव्यं न लभ्यते, तत्र तत्सदृशानां बहूनां मन्दरसगुणवीर्याणां बहूनां द्रव्याणां ग्रहणं कर्तव्यमिति ॥ ६५ ॥

इदानीं मन्दरसगुणवीर्याणामलाभे किं कर्तव्यमित्याह —

मन्दरसगुणवीर्याणां बहूनामलाभे तीव्ररसगुणमेकमपि तद्ग्राह्यम् ॥ ६६ ॥

इति । पूर्ववाक्येन गतार्थमिति न वर्ण्यते ॥ ६६ ॥

इदानीं सकलस्य कर्मणो द्विविधभेदावरोधात् तत्प्रदर्शनार्थमाह —

विभज्य प्रयोज्यं स्वस्थवृत्तमातुरवृत्तं च यथास्वम् ॥ ६७ ॥

इति । स्वस्थस्य वृत्तं स्वस्थवृत्तम् । वर्तनं वृत्तं गुलिकाञ्जनादि भोजनान्तावरुद्धम् । आतुरस्य वृत्तमातुरवृत्तम् । तच्च यथावस्थं यथादोषं चानेकधावधारणीयमेतद् । एतद् द्वयं विभज्य विभागं कृत्वा प्रयोक्तव्यम् । यथास्वमिति स्वस्थस्य वृत्तं स्वस्थस्यैव प्रयोज्यम् । आतुरस्य वृत्तमातुरस्यैव प्रयोज्यमिति । तस्मादेवं नियम्यत इति । भिन्नफलत्वादुभयोः । कथं भिन्नफलत्वम्, उभयमारोग्यसाधनमेवेति ।

तथाप्यस्ति फलावस्थाविशेषापेक्षया । स्वस्थवृत्तं हि नाम लब्धस्य फलस्यानपायित्वेन रक्षणम् । आतुरवृत्तं हि नामालब्धस्यारोग्याख्यस्य फलस्य लाभाय समीहा । तस्मादसङ्करेण कर्तव्यमित्युक्तं भवति । एवं कर्मभिः पदार्थः स्वस्थातुरवृत्तभेदेन द्विधा भिन्नः ॥ ६७ ॥

एवमारोग्यसाधनं सर्वमुत्पत्तिलक्षणभेदकारि । (त)त्र तत्फलप्रयोगभेदेन चिन्तयित्वा तस्य विषयभूतानां धातुदोषमलानामवस्थान्तराणि समुदायतः प्रदर्शयन्नाह —

रक्षणवर्धनक्षपणप्रशमनानि साम्यक्षयोदयप्रकोपेषु यथास्वं दोषधातुमलानाम् ॥ ६८ ॥

एते रक्षणादयश्चत्वारः प्रयोगाश्चतुर्षु साम्यादिषु दोषादीनां यथाक्रमं प्रयोज्याः । अत्रोदयप्रकोपयोः क्षपणशमनयोश्च कः पुनर्विशेष इति । उदयो वृद्धिरित्येकोऽर्थः । वृद्धिरित्युक्ते सर्वेषां सञ्चयप्रकोपादीनां ग्रहणं भवति, सामान्यत्वात् । तथापि सामान्यशब्दाः प्रयोजनवशाद् विशेषेष्वप्यवतिष्ठन्ते । तद्यथा—अञ्जलिना पिबति । अञ्जलिना सूर्यमुपतिष्ठतेत्युक्ते पिबतिसंयोगात् पाणिपुट इति गम्यते । एवमत्राप्युदयशब्दो वृद्धिसामान्ये वर्तमानोऽपि क्षपणक्रियासम्बन्धात् तदर्हस्य वृद्धिभेदस्य गमको भवति । प्रकोपशब्दश्च क्षपणप्रशमनयोग्यावस्थासामान्योऽपि शमनसम्बन्धात् तादृशमेव गमयति । तस्मादेतदुक्तं भवति — अतिवृद्धाः क्षपणार्हाः नि(ब)र्हणार्हाः प्रकुपिताः अल्पेनापि असञ्चितोत्थाना वा । सहसोत्पन्ना इत्यर्थः । तत्र प्रशमनमिति । अथवास्य वाक्यस्यान्यथार्थः । स्वस्थवृत्तमातुरवृत्तं चेति विभज्य योज्यमित्युक्तम् । तत्र कथं स्वस्थवृत्तमातुरवृत्तमिति संक्षेपतस्तत्प्रदर्शयन्नाह—रक्षणेत्यादि । तत्र रक्षणं स्वस्थवृत्तं, शेषमातुरवृत्तमिति । एवं साम्यं स्वास्थ्यस्वरूपं, तस्य रक्षणमशेषं सर्वं व्याधिसंज्ञितं व्याधिस्वरूपं तत्प्रयोग आतुरवृत्तमिति विषयश्चोभयोः स्वरूपं च सिद्धं भवति ॥ ६८ ॥

एतावत्त्वादेतत् चिकित्सितं कर्मपदार्थः ॥ ६९ ॥

इति । संक्षेपत एतावदेव चिकित्सितं कर्मपदार्थः । एतावच्चिकित्सितमिति सिद्धे एतदिति न युक्तम् । न पूर्वोक्तः स्वस्थातुरवृत्तसंग्रहार्थत्वात् । एत स्वस्थातुरवृत्तसंज्ञितमिति ॥ ६९ ॥

एवं सकलमारोग्यशास्त्रं शरीरतः परीक्षितम्। अस्याः परीक्षायाः साधनभूतानि प्रमाणानि कानीत्याह —

**प्रत्यक्षानुमानोपमानागमार्थापत्तिसम्भवाः प्रमाणानि ॥ ७० ॥**

इति। एतानि हि प्रमाणानि लौकिकलोकान्तराणामर्थानामधिगमोपायानि, प्रमाणाधीनत्वात् प्रमेयाधिगमस्येति। प्रमाणं प्रमेयं प्रमाता प्रमितिरिति चत(त्र ?) सृषु विधासु लोकव्यवहारः प्रवर्तते। यथा व्रीह्यादिः प्रमेयोऽ(न)धिगतपरिच्छेदास्थितः। तस्य परिच्छेदार्थं प्रस्थादि प्रमाणमुपादीयते। तत्र प्रमाता देवदत्तो हस्तेन प्रस्थादिना प्रमाणेन प्रमिण्वन् तस्य व्रीह्यादेरियत्तापरिच्छेदप्रमितिमुद्भावयति। तां प्रमितिमुपलभमानो व्यवहरतीति। + + + + + + + भः प्रत्यक्षादिभिः प्रमाणैः प्रमेयाञ्छास्त्रार्थान् तत्तत्प्रमाणयोगाद् वैद्यः प्रमाता प्रमिण्वन् सम्यग्ज्ञानाख्यां प्रतीतिमुद्भावयति। सा हि सर्वस्य साधिका। उक्तं हि —

> "बुद्धे र्बौद्धयानि शास्त्राणि सूक्ष्मैस्तत्त्वार्थनिश्चयैः।
> तत्त्वार्थग्रहणा बुद्धिर्नैषा सर्वत्र विद्यते ॥"

इति। एतेषां प्रत्यक्षादीनां लक्षणनिरूपणे तन्त्रान्तरप्रसङ्गान्न निरूप्यते। किञ्चित्पुलाकमात्रमुच्यते। इन्द्रियज्ञानमविकल्पं प्रत्यक्षं, यथा रसज्ञानं रूपज्ञानमिति। अक्षमक्षं प्रति वर्तत इति प्रत्यक्षम्। लिङ्गदर्शनाल्लिङ्गिनि प्रतिपत्तिरनुमानम्। लिङ्गज्ञानात् संबन्धानुसरणाच्च पश्चात् ज्ञायत इत्यनुमानम्। प्रसिद्धेनाप्रसिद्धस्य साधनमुपमानम्। यथा मुद्गस्तम्भनस्तथा मुद्गपर्णीति। आगम आप्तवचनम्। आप्तः क्षीणदोषः। तस्य वचनं त्रिविधं—श्रद्धेयार्थमप्रत्यक्षार्थमनुमेयार्थमिति। एतत् त्रयं तन्त्रेषु द्रष्टव्यम्। उक्तेनार्थेनानुक्तस्यागमनमर्थापत्तिः रात्रौ न भुङ्क्ते देवदत्त इत्युक्ते अर्थादापद्यते दिवा भुङ्क्त इत्यर्थसामर्थ्यं गमयति, आहारक्रियासम्बद्धत्वाच्छरीरस्थितेः। सम्भवो नाम अविनाभावीयोऽर्थः। यथा प्रस्थ इत्युक्ते कुडुवस्तत्र सम्भवति, यथाढके प्रस्थ इति ॥ ७० ॥

इह तावत् षट्सु पदार्थेषु द्रव्यादिषु यः कर्मपदार्थः तदर्थाः शेषाः पञ्च पदार्थाः। तस्य सिद्धिः कथं भवतीत्याह —

द्रव्यातुरोपस्थायकभिषजां सम्पदमपेक्षते सिद्धिः कर्मणः ॥ ७१ ॥

इति । द्रव्यादयश्चत्वारः पादाः शास्त्रेषु सम्पत्तितः प्रोक्ताः । (कां ?) तेषां सम्पदमपेक्षते, तदायत्ता कर्मणः सिद्धिः फलेन संयोगः ॥ ७१ ॥

अत्रायं चतुष्पात्संग्रहः किं पूर्वोक्तारोग्यसाधनः षट्पदार्थावरुद्धोऽथान्यः ॥ ७२ ॥

यद्यन्यः अव्यापकत्वं साधनस्य, यद्यवरुद्धः पृथग्वचनमपार्थकं, तत्र साधन एवावरुद्धं भेदतः क्वचिद् व्यवस्थितम् इदं चतुष्टयम् । कथमिति । द्रव्यग्रहणाद् द्रव्याश्रिता गृहीताः । साधनवचनात् साध्यस्यारोग्यस्याधिष्ठानभूतः पुरुषः परिगृहीतः । साधने करणेन साधयित्वा विद्यत इति कर्ता वैद्यः परिगृहीतः । तस्य साधनस्य उपाङ्गभूतत्वादविवक्षितोऽपि तच्छक्त्या परिकर्मी गृहीतः । यथा घृतमानीयतामित्युक्ते अविवक्षितमपि भाजनं गम्यते, तेन विना न भवतीति । एवमत्रापीति ॥ ७२ ॥

एवमारोग्यशास्त्रस्य व्याख्यानं प्रतिज्ञाय तत्राधिकृतमुख्यप्रयोजनारोग्यनिर्वर्तकसाधनव्याजेन सकलशास्त्रं परीक्षितम् । मुख्यप्रयोजनस्यारोग्यस्यान्तरायकराणां रोगाणां प्रतिषेधोपायदर्शनार्थं पादचतुष्टयं चोक्त्वा तच्चतुष्टयनिर्वर्तितारोग्यसाध्यं पूर्वोक्तचातुर्विध्यं परिगृहीतं फलाख्यम् । तस्य सिद्धिः कथं भवतीति प्रदर्शयन्नाह —

कर्मणश्च सिद्धौ सर्वार्थसिद्धिः ॥ ७३ ॥

इति । कर्मणः सम्यक्प्रयोगनिर्वर्तितस्य सिद्धौ सम्पत्तौ सर्वार्थसिद्धिश्च भवतीति । चशब्दात् पूर्वोक्तफलाकर्षणं कृतं वेदितव्यम् । फलपरत्वाद् क्रियोपरमस्येति । सर्वार्थ इत्युच्यते धर्मार्थकाममोक्षाः, तेषां सर्वार्थानां सिद्धिः प्राप्तिर्भवतीति । आरोग्ययुक्तो हि पुरुषश्चतुष्टयावाप्तिसमर्थो भवतीति । उक्तं हि —

"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ॥"

इति ।

"तस्मात् प्रज्ञावता पुरुषेणारोग्य(स्य) साधने ।
सततं यत्न आस्थेयस्तन्मूलाः सर्वसम्पदः ॥"

इति ।

"आरोग्यं परमो लाभो निर्वाणः परमं सुखम् ।"

इति ॥ ७३ ॥

इति भदन्तनागार्जुनस्य प्रव्रजितस्य वैद्येन्द्रस्य
रसवैशेषिकसूत्रस्य नरसिंहकृतं भाष्यं
समाप्तम् ॥

इदमिह कृतभाष्यं वार्त्तिकं तन्त्रसारं
मुनिवरमतिभेदाद्दृष्टशाखस्य तस्य ।
तदधिगमसमीहा सम्मता पुण्यलेशाद्
भवतु जगति चित्तं प्राणिनां शान्तिबीजम् ॥

मात्सर्यमानप्रतिपक्षभूतं
ज्ञानं मुनीनां महतां यथार्थम् ।
तत्प्राप्य कुर्यादिह कः प्रसन्नं
मात्सर्यपङ्काकुलमात्मचित्तम् ॥

तस्माद् विहायोन्नतिमात्मसंस्थां
सर्वत्र वाचः पदवीं परीक्ष्य ।
संप्राप्यते यत्परमार्थसिद्धि-
र्बालाभिलापेष्वपि तत्त्वविद्भिः ॥

आत्रेयादिभ्यो नमः ।

शुभं भूयात् ।

## वर्णक्रमसूची।

Scanned by CamScanner





---

शुभं भूयात्।

